भाव: ।। तदुपकरणेति ।। श्रुत्यर्थनिर्णायकन्यायग्रथनात्मिकाया इत्यर्थः । धर्मे प्रमीयमाणे हि वेदेन करणात्मना । इतिकर्तव्यताभागं मीमांसा पूरयिष्यतीति वचनादिति द्रष्टव्यम् । अनेन श्रुतितन्मीमांसाशास्त्रयोः उक्तविशेषणविशिष्टं परब्रह्म विषय:। निरुक्तो मोक्षः प्रयोजनम्। साधनचतुष्टयसंपन्नोऽधिकारी। यथायोग्यं सम्बन्ध इत्युक्तं भवति । तत्त्वमिति सैद्धांतिकं रहस्यं प्रमेयमित्यर्थः ।

एवं श्रुतितन्मीमांसाशास्त्रयोः स्वाभिप्रेतविषयादिकं निरूप्य पराभिप्रेतविषयादिमाह ।। अपरेत्यादिना ।। अज्ञाननिमित्तं ऐक्याज्ञाननिमित्तम् । निबर्हणीयं विनाश्यम् ।। अनर्थहेतोः ।। दुःखाद्यनर्थहेतोः । अस्याज्ञानस्य प्रहाणाय विनाशायेत्यर्थः ।। आत्मैकत्वेति ।। आत्मनः जीवस्य यद् ब्रह्मणा एकत्वम् ऐक्यं तस्य या विद्या यज्ज्ञानं तस्य प्रतिपत्तये प्राप्तय इत्यर्थः ।। सर्वशास्त्रेति ।। श्रुतितन्मीमांसाशास्त्रेत्यर्थः । तथाच जीवब्रह्मैक्यं विषयः । अज्ञाननिवृत्तिः प्रयोजनम् तत्कामोऽधिकारी । यथायोग्यं सम्बन्ध इत्युक्तं भवति ।

### श्रीगुरुराजीयटिप्पणी

ननु यथायथं प्रत्यक्षादिप्रमाणसिद्धजीवजडात्मकप्रपञ्चाभिन्नत्वेनासन्दिग्धत्वान्न ब्रह्मणः शास्त्रविषयत्वं भवतीत्यतोऽद्वैतवादे एतद्दोषप्रसक्तावपि द्वैतवादे नैतद्दोषप्रसक्तिरित्याशयेनोक्तम् ।। सकलजीवजडात्मकात् प्रपञ्चाद्भिन्नमिति ।। जीवब्रह्मभेदस्य द्वैतवाद इवाद्वैतवादेऽपि कथञ्चित् सत्त्वान्न परमतेऽपि विषयत्वानुपपत्तिः । अन्यथा भेदवादेऽपि तत्प्रसक्तिरविशेषादित्यतो भवेदेवं यदि भेदमात्रं विषयत्वोपपादकं स्यान्नैवं, किं तर्हि सर्वदा पारमार्थिकात्यन्तभिन्नत्वमेवेत्यतस्तद्भावाभावाभ्यां विषयत्वाविषयत्वव्यवस्थेत्यभिप्रेत्योक्तम् ।। परमार्थत एवात्यन्तभिन्नमिति ।। त्रीण्यद्वैतदर्शनानि । मुक्ताविव संसारेऽपि जीवब्रह्मणोः पारमार्थिकोऽभेद एव । न चैवमेकीभवन्तीति च्विप्रत्ययस्यास्वारस्यं,

तस्याभूततद्भावार्थकत्वात्, प्रकृते मुक्तेः प्रागभेदस्य सिद्धत्वेन तदयोगादिति वाच्यम् । अत्र मते संसारे जीवब्रह्मणोः काल्पनिकभेदस्य सत्त्वेन भेदभ्रमनिवृत्तेरभूततद्भावार्थकत्वेन च्विप्रत्ययस्य सार्थकत्वादित्येकं मतम् । च्विप्रत्ययस्वारस्यान्मुक्तेः पूर्वं केवलभेद एव, मुक्तौ त्वभेद इति द्वितीयं मतम् । मुक्तेः पूर्वं भेदाभेदौ, मुक्तौ तु केवलाभेदः । एवं च च्विप्रत्ययो युक्तः, मुक्तेः पूर्वं केवलाभेदाभावादिति तृतीयं मतम् । तत्र परमार्थत इति आद्यमताद्वैलक्षण्योपदर्शनम् । तत्रायं भावः । अद्वैतमते ब्रह्मणः परमार्थतः स्वप्रकाश प्रत्यगात्माभिन्नत्वेऽपि काल्पनिकभेदस्य सत्त्वाद्विषयत्वोपपत्तिरिति न वाच्यम् । काल्पनिकभेदप्रयुक्तविषयत्वतिरस्कारेण पारमार्थिकाभेदप्रयुक्ताविषयत्वस्यैव न्याय्यत्वात् । न हि पारमार्थिकप्रयुक्तस्यापारमार्थिकेन प्रतिबन्धोऽस्ति । तथात्वे दहनेऽपि आरोपितेन गुञ्जपुञ्जेन पारमार्थिकदहनप्रयुक्तदाहकत्वप्रतिबन्धप्रसंगादिति । एवेति द्वितीयाद्वैतमताद्वैलक्षण्योपदर्शनम् । तत्रायं भावः । मुक्तेः पूर्वं परमार्थतोऽत्यन्तभिन्नस्य जीवस्य मुक्तावभेदस्य 'नान्यदन्यत्वमापन्नम्' इत्याद्युक्तरीत्या बाधितत्वेन मुक्तावभेदसिद्धये ततः पूर्वमप्यभेदस्य वाच्यतया, भेदाभेदयोरुभयोरपि पारमार्थिकत्वे तृतीयमतप्रवेशेन, वक्ष्यमाणरीत्या भेदस्य काल्पनिकत्वेऽभेदस्य पारमार्थिकत्वे पूर्वमतप्रवेशापत्त्योक्तरीत्या न ब्रह्मणो विषयत्वसंभवन इति । अत्यन्तेति तृतीयमताद्वैलक्षण्योपदर्शनम् । तत्रायं भावः । भेदाभेदवादेऽपि ब्रह्मणः स्वतसिद्धजीवात्माभिन्नत्वान्न विषयत्वोपपत्तिः । न च भेदस्यापि सद्भावाद्विषयत्वमिति वाच्यम् । अभेदेनाविषयत्वप्राप्तौ विरोधापत्तेरिति । एतच्चाद्वैतदर्शनत्रयं भोक्त्रापत्तेरित्येतदधिकरणीयचन्द्रिकायां स्पष्टम् ।

## मायावादपरशुः

अस्य प्रकरणस्य, वेदादेः स्वाभिमतविषयादिसमर्थनं पराभिमतविषयादिनिरासकत्वं च प्रयोजनमिति वक्तुं किं तत्स्वाभिमतं विषयादिकं

किं तत्पराभिमतविषयादिकमित्याकाङ्क्षानिवृत्तय आचार्याभिमतं विषयादिकं तावदाह- इहेति । सकलश्रुतिस्मृत्याद्युक्तज्ञानवतोऽपि वैराग्यादिशून्यस्य मोक्षो न दृश्यत इति न वेदानां दुःखनिवृत्तिः परमानंदावाप्तिश्च प्रयोजनमित्याशंकानिवृत्त्यर्थं विविधसांसारिकदुःखदर्शनेन विरक्तस्य शमदमादिमत इति विशेषणद्वयम् । मुमुक्षोरिति मध्यमाधमाधिकारिस्वरूपकथनम् यद्गुणविशिष्टतया भगवत्प्रतिपादनं मोक्षसाधनं तद्गुणविशिष्टतया प्रतिपादयितुं वेदादि प्रवृत्तमित्याह – निखिलगुणोदारमिति ।

पराभिप्रेतं विषयादिकमनुवदति- अपरे त्विति ।

टीका

**अखिलं चैतन्यमात्रातिरिक्तम् अज्ञानकल्पितमिति यन्मतं तदेव ध्वान्तमिव । सम्यग्ज्ञानप्रतिरूपत्वात् । तन्निरसने दिवाकर इव । जयति उत्कृष्टो वर्तते । तथा चोक्तं,**

**जयेर्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः ।**
**उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयेऽर्थे सकर्मकः ॥ इति ।**

**सत्त्वं ज्ञानसुखशक्तीनां विशेषणम् । ज्ञानस्य यथार्थत्वं सत्त्वं, सुखस्य दुःखासम्भिन्नत्वं, शक्तेरप्रतिबद्धता । ताभिः पयोनिधिरिव । पयोनिधिः परिमितो भवतीत्यतस्तममितत्वेन विशिनष्टि । द्विविधः खलु पुरुषार्थोऽनिष्टनिवृत्तिरिष्टप्राप्तिश्च । तत्र अखिलेति मायावादादिदुर्मतप्रसञ्जितमिथ्याज्ञानाद्यनिष्टनिवर्तकत्वेन नरसिंहस्तुतिर्विहिता । अमितेति सम्यग्ज्ञानादिसमस्तेष्टसम्पादनसमर्थत्वेनेति ।**

मन्दारमञ्जरी

॥ प्रतिरूपत्वादिति ॥ प्रतिकूलत्वादित्यर्थः । उक्तार्थे अभियुक्तसंमतिमाह ॥ तथा चोक्तमिति ॥ जयेरिति ॥ जयेर्धातोर्जयाभि-

भवयोरर्थयोर्वृत्तिः । तत्राऽद्ये उत्कर्षप्राप्तिरूपेऽर्थे असौ जयतिधातुरकर्मकः । जयति उत्कृष्टो वर्तत इति कर्मनैरपेक्ष्येण प्रतीतेः । द्वितीयेऽर्थे तिरस्काररूपे सकर्मकः । चैत्रः शत्रून् जयति, अभिभवति, तिरस्करोतीति कर्मसापेक्ष-त्वेनैव प्रतीतेरिति सम्मतिश्लोकार्थः ॥ ज्ञानस्य यथार्थत्वं सत्त्वमिति ॥ इह सत्त्वं नाम नाबाध्यत्वादिकमभिप्रेतम् । तस्यास्मदादिज्ञानादावपि भावात् । किं तु निर्दुष्टत्वमिति भावः ॥ समर्थत्वेनेति ॥ स्तुतिर्विहिता इत्यनेनानुषक्तेनास्यान्वयः । तथा च ग्रन्थादौ अनिष्टनिवर्तकत्वेन इष्टप्रापक-त्वेन च अनुसंहितो नरसिंह एव तदुभयमपि करोतीत्यर्थः ।

**श्रीनिवासतीर्थीयटिप्पणी**

परममङ्गलं परममङ्गलरूपम् । अखिलस्याप्यज्ञानकल्पितत्वोक्तौ चैतन्यस्याज्ञानकल्पितत्वं प्रसज्येत । अतो व्याचष्टे ॥ चैतन्यमात्रेति ॥ मात्रशब्दः केवलार्थः ॥ अज्ञानकल्पितमिति यन्मतमिति ॥ अत्र मध्यमपदलोपीसमासः । अज्ञानेत्यनंतरं परिकल्पितशब्दस्य लोपाङ्गीकारात् । अज्ञानेन परिकल्पितम् अज्ञानपरिकल्पितं, तच्च तत् अखिलं च अज्ञानाखिलमिति भाव्ये विशेष्यभूताखिलपदस्य पूर्वनिपातमंगीकृत्य विशेषणं विशेष्येण बहुलमित्यत्र बहुलग्रहणाद्विशेष्यस्यापि विशेषणेन समासांगीकारात् अखिलाज्ञानमिति मतम् अखिलाज्ञानमतं, तदेव ध्वांतमिवाखिलाज्ञानमतध्वांतं, तस्य दिवाकर इव । नन्वभिभवार्थस्य जयिधातोः सकर्मकत्वस्य देवदत्तः शत्रून् जयतीत्यादौ दर्शनेनात्र कर्मानुक्तेर्न्यूनतेत्यतो नात्र जयिधातुरभिभवार्थः, किंतु उत्कृष्टत्वेन सत्तार्थकःतस्मिन्नर्थे स धातुरकर्मक एव । अतो न तदनुक्तिदोष इत्याशयेनाह ॥ जयतीति ॥ अत्र नियामकमाह ॥ तथाचोक्तमिति ॥ जि जय इति धातोः जयाभिभवयोर्वृत्तिरस्तीत्यर्थः । अभिभवः तिरस्कारः ॥ कोऽसावाद्योऽत्यर्थ इत्यत आह ॥ उत्कर्षप्राप्तिरिति ॥ विशेषणमिति ॥ ज्ञानं च सुखं च शक्तिश्च ज्ञानसुखशक्तयः । सत्यश्च ताः

ज्ञानसुखशक्तयश्च, ताभिरिति विग्रहो द्रष्टव्यः ॥ इत्यत इति ॥ तद्वदस्यापि परिमितत्वशंकापरिहारायेत्यर्थः ॥ विशिनष्टीति ॥ अमितत्वं नृसिंहस्य विशेषणं दत्तमित्यर्थः । ततश्च अमितश्चासौ सज्ज्ञानसुख-शक्तिपयोनिधिश्चेति विग्रहो द्रष्टव्यः । ननु विशेषणांतरं विहाय एताभ्यामेव विशेषणाभ्यां स्तवने किं प्रयोजनमित्यत आह ॥ द्विविध इति ॥ खल्विति वाक्यालंकारे ॥ प्रसंजितेति ॥ प्रसक्तेत्यर्थः ॥ इष्टसंपादनेति ॥ तं यथा यथोपासते तदेव भवतीति श्रुतेरिति भावः ॥

### श्रीगुरुराजीयटिप्पणी

अखिलस्याज्ञानतायाः मायावादिनानङ्गीकारादज्ञानशब्दस्याज्ञान-कल्पितार्थकत्वेऽप्यखिलस्याज्ञानकल्पितताया अपि तेनानभ्युपगमादखिला-ज्ञानमतेति कथं मायावादमतपरिग्रह इत्यतोऽत्राखिलपदस्य चैतन्याति-रिक्ताखिलपरत्वादज्ञानशब्दस्य तत्कल्पितार्थत्वस्याभिप्रेतत्वात्, चैतन्याति-रिक्तस्याखिलस्य चाज्ञानकल्पिततायास्तेनाभ्युपगमात् युक्तोऽनेन तत्परिग्रह इत्याशयेन व्याख्याति । अखिलमित्यादिना । अज्ञानसंम्बन्धिध्वान्ता-प्रसिद्ध्याऽज्ञानस्य ध्वान्तमिति षष्ठसमासानुपपत्तेराह ॥ तदेवेति ॥ निरसन इति ॥ गम्यार्थानामप्रयोग इत्यभियुक्तोक्तेरत्र चाश्वयुक्तो रथो अश्वरथ इत्यादौ युक्तादिपदस्येव समासेन गम्यमानत्वान्निरसनपदाप्रयोग इति भावः ।

ननु जयतेः सकर्मकत्वेन कर्मणोऽवश्यं वक्तव्यत्वादत्र तदनुक्तिर्दोष इत्यतोऽभिभवार्थकस्य सकर्मकत्वेऽपि उत्कर्षप्राप्तिरूपजयार्थकस्याकर्म-कत्वात् प्रकृते च जयार्थकत्वेन कर्मणोऽनपेक्षितत्वान्न तदनुक्तिर्दोष इत्यभिप्रेत्य जयार्थतया व्याचष्टे ॥ उत्कृष्टो वर्तत इति ॥ भवेदेवं यद्यभि-भवार्थकस्य सकर्मकत्वं, जयार्थकस्य चाकर्मकत्वमित्येतदेव सिद्धं स्यात्, तदेव कुत इत्यतोऽत्रार्थेऽभियुक्तसंमतिमाह ॥ तथाचोक्तमिति ॥ देवेनेति शेषः । अत्र जयेर्जयाभिभवयोरिति मूलपाठः । माधवीयधातुवृत्त्यादौ तथा दर्शनात् । अयमर्थः। जयिधातुर्जयाभिभवयोरर्थयोर्वर्तते । तत्राऽद्ये

जयरूपेऽर्थेऽसौ जयिधातुरकर्मकः । राजा जयति उत्कृष्टो वर्तते इत्यत्रो-त्कर्षरूपस्य कर्मणः उत्कर्षप्राप्तिरूपधात्वर्थेनोपसंगृहीतत्वेन पृथक्कर्मान-पेक्षितत्वादकर्मकत्वम् । यथोक्तम्—

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ इति ।

कर्मनैरपेक्ष्येण प्रतीतौ कोऽसावाद्योऽर्थ इत्यतस्तमाह ॥ उत्कर्षेति ॥ द्वितीयेऽर्थे तिरस्काररूपेऽर्थे सकर्मकः । राजा शत्रून् जयति, अभि-भवति, तिरस्करोतीति कर्मसापेक्षत्वेन प्रतीतेरिति । क्वचिज्जयेर्जया-भिभवयोरित्यपि पाठः । तमेवाश्रित्य भावप्रकाशिकायां व्याख्यानं कृतमित्यवधेयम् । अत्र यद्यपि जयिरिति न श्तिपा निर्देश इति स्पष्टमेव । नाप्ययमिका निर्देशः । तथा सति क्ङिति चेति किन्निमित्तकगुणनिषेधेन सार्वधातुकार्धधातुकयोरिति गुणासम्भवेन अयादेशप्रसक्त्या जयिरिति निर्देशायोगात् । तथाऽपि इन्धिभवतिभ्यां चेत्यत्रागन्तुकेनेकारेण निर्देशः, न त्विका निर्देशः । तथा सत्यनिदितां हल उपधायाः क्ङितीति किन्निमित्तकनलोपप्रसक्त्या इन्धीति निर्देशायोगात् । यथा वा हरेश्छन्दसीति सूत्रे हरेरित्यागन्तुकेनेकारेण गुणेन च निर्देशः, न त्विका निर्देशः । तथा सति क्ङिति चेति किन्निमित्तकगुणप्रतिषेधप्रसक्त्या गुणस्यासम्भवेन हरेरिति निर्देशायोगात् । तथा जयिरित्यागन्तुकेनेकारेण गुणेन च निर्देशः । उदाहृतज्ञापकावष्टम्भेन इकृश्तिपोरिव धातुनिर्देशे अकिदिकारस्यापि सिद्धत्वेन इकृश्तिपौ धातुनिर्देश इत्यस्य प्रा कताया एव न्याय्यत्वेन नियमत्वाभावात् । एतच्च इन्धिभवतिभ्यां च, हरेश्छन्द-सीत्यादिसूत्रीयपदमञ्जर्यादिषु स्पष्टम् ।

सन्निधानात्सत्त्वस्य ज्ञानमात्रविशेषणत्वभ्रमनिरासायाऽह ॥ सत्त्व-मिति ॥ ईश्वरज्ञानसुखशक्तीनामिवास्मदादिज्ञानसुखशक्तीनामपि पारमा-र्थिकत्वेन व्यावर्त्याभावात्पारमार्थिकत्वरूपसत्त्वस्य ज्ञानादिविशेषणत्वा-नुपपत्तिमाशङ्क्य परिहरति ॥ ज्ञानस्येत्यादिना ॥ प्रकृत्यादिभ्यस्तृतीया,

तृतीया तत्कृतार्थगुणवचनेनेति सूत्रे तृतीयेति योगविभागाद्वा कर्तृकरणे कृता बहुलमिति बहुलग्रहणाद्वा तृतीयासमासोऽयमित्याशयेनाह ॥ ताभिरिति ॥ अत्र इवशब्दः सादृश्यनिमित्तोऽयमभेदोपचार इति दर्शयितुं, न तु क्रियावाक्यस्याङ्गम् । तत्तु ताभिः पयोनिधिरिवेति ध्येयम् ॥ तममितत्वेन विशिनष्टीति ॥ अनेनामितश्चासौ सज्ज्ञानसुखशक्तिपयो-निधिश्चेति विग्रहः सूचितो भवति ।

**मायावादपरशुः**

॥ आदावाचरतीति । अनेन मङ्गलं निबद्धमिति सूचितम् । अन्यथा अनुष्ठीयमानमङ्गलस्य प्रकरणादित्वमनुपपन्नं स्यात् । चैतन्यमात्रेति । अत्र मात्रशब्दः केवलार्थः । तेन केवलचैतन्यातिरिक्तविशिष्टाकारस्यापि मिथ्यात्वं लब्धं भवति ॥ जयेरिति ॥ धातुनिर्देशार्थक इकारप्रत्ययोऽयम् । न तु 'इक्श्तिपौ धातुनिर्देशे' इत्यनेनोक्त इक् । तेन जि इत्यस्मादिक्प्रत्यये कित्त्वाद्गुणप्रतिषेधे इयङादेशे जियेरिति भवेत्, जयेरिति कथमिति परास्तम् । धातुनिर्देश इक्श्तिपाविति नियमस्य 'विपराभ्यां जेः' इति केवलधातुनिर्देशं कुर्वता सूत्रकृता त्याजितत्वात् । प्रामाणिकप्रयोगानुसारेणेकारस्यापि धातुनिर्देशे ग्राह्यत्वात् । ततश्चायमर्थः– जयेः जिधातोः जयेऽभिभवे च वृत्तिः । आद्येऽर्थेऽसावकर्मकः । कुत आद्येऽर्थेऽकर्मक इत्यत आह ॥ उत्कर्षप्राप्तिरिति ॥ यस्मादु-त्कर्षप्राप्तिराद्योऽर्थः, स चोत्कर्षः कर्मणा विनैव प्रतीयते अतोऽसाव-कर्मकः । अभिभवलक्षणेऽर्थेऽयं धातुः सकर्मकः । 'राजा शत्रूञ्जयति' इति सकर्मकतया प्रतीतेरिति ॥ सत्त्वमिति ॥ अत्र सत्त्वशब्दो निर्दुष्टत्ववाची । एवं चायं येन येन विशेष्यते तत्तस्य दोषाभावं वक्ति । ज्ञानस्यायथार्थत्वं दोषः । तस्य निर्दुष्टत्वेऽभिहिते यथार्थत्वं लभ्यते । सुखस्य दुःखसंभेदो दोषः । तस्य निर्दोषत्वेऽभिहिते दुःखासंभिन्नत्वं लभ्यते । शक्तेः प्रतिबंधो दोषः । तस्य निर्दोषत्वेऽभिहितेऽप्रतिबद्धत्वं लभ्यत इति भावः ।

टीका

प्रपञ्चस्याज्ञानकल्पितत्वं विना जीवब्रह्मैक्यं शास्त्रोक्तं नोपपद्यत इत्याक्षेपः ।

अखिलाज्ञानमतं ध्वान्तसममित्येतदसहमान आह– जीवब्रह्मणोरेकत्वं हि श्रुतितन्मीमांसाभिस्तात्पर्यतः प्रतिपाद्यते । न चैतच्चैतन्यातिरिक्तस्याखिलस्य अज्ञानकल्पिततया विनोपपद्यते । तत् कथमेवमुच्यते? इति ।

जीवब्रह्मणोरेकत्वस्य शास्त्रोक्तत्वे शास्त्रस्यानारम्भणीयत्वापादनम्

मैवम् । स्यादेतदेवं, यदि जीवब्रह्मणोरैक्यप्रतिपादकत्वं वेदतन्मीमांसयोरुपपन्नं स्यात् । न चैतदस्ति । तत्परतया व्याख्याने वेदादेरनारम्भणीयत्वप्रसङ्गात् । तत्कथमिति । तत्राह–

मायावादखण्डनम्

विमतम् अनारम्भणीयम् अन्यथाप्रतिपादकत्वात् । यदित्थं तत्तथा यथा सम्प्रतिपन्नम् ।

टीका

विमतशब्दप्रयोगप्रयोजनम्

विमतम् आरम्भणीयत्वानारम्भणीयत्वाभ्यां विमतिविषयीभूतश्रुतितन्मीमांसाशास्त्रम् । ''शास्त्रमनारम्भणीयं' इत्येवोक्ते बौद्धादिशास्त्राणां अनारम्भणीयत्वस्य परेणाभ्युपगतत्वात् इष्टापादनमेतत् स्यात्। तर्हि वेदादीत्येवोच्यताम् । मैवम्। विमतिग्रहणेन निराश्रयत्वादिदोषपरिहारस्यापि सूचितत्वात् ।

सम्प्रतिपन्नपदप्रयोगप्रयोजनम्

एवमापाद्यवैकल्यादिदोषपरिहारसूचनाय 'यथा सम्प्रतिपन्नम्' इत्युक्तम् । अन्यथा 'यथा बौद्धादिशास्त्रम्' इति ब्रूयात् ।

अनारम्भणीयत्वपदार्थविवरणम्

**नन्वनारम्भणीयत्वं नाम अप्रणेतव्यत्वं वा? अश्रोतव्यत्वादिकं वा? आद्ये त्विष्टापादनम् । वेदस्याप्रणेतव्यत्वात् । न द्वितीयः । बौद्धादिशास्त्रश्रवणस्यापि दर्शनात् । मैवम् । प्रेक्षावदुपादेयत्वाभावस्य विवक्षितत्वात् ।**

मूलस्य तर्कपरतासूचनाय 'स्यात्' इति पदाध्याहारः

**स्यादिति प्रतिज्ञावाक्यशेषः । तथा च 'यदि वेदादिकं जीवब्रह्मणोरैक्यप्रतिपादकं स्यात्तदा अनारम्भणीयं प्रसज्येत' इत्युक्तं भवति ।**

'अन्यथाप्रतिपादकत्वात्' इत्यस्य वैयर्थ्यशङ्कानिरासः

**आपादकमेव अन्यथाप्रतिपादकत्वात् इत्यनेन हेतुवाक्येन विव्रियत इत्यदोषः । तच्चोत्तरत्र प्रदर्शयिष्यामः ।**

**मन्दारमञ्जरी**

आचार्यकृतस्य अनारम्भणीयत्वसमर्थनस्य प्रथमश्लोके प्रतिज्ञातं यदखिलाज्ञानमतस्य ध्वान्तसमत्वं तत्समर्थनार्थत्वात् सङ्गतिरिति दर्शयितुं शङ्कामुत्थापयति ॥ अखिलेति ॥ न चैतच्चैतन्यातिरिक्तस्याखिलस्याज्ञानकल्पिततया विनोपपद्यत इति ॥ सर्वस्य सत्यत्वे सर्वज्ञत्वासर्वज्ञत्वादिविरुद्धधर्माणामपि सत्यत्वेन ऐक्यानुपपत्तेरिति भावः । यद्वा, सर्वस्य सत्यत्वे जीवब्रह्मैक्यशब्दोपलक्षितसजातीयविजातीयस्वगतनानात्वराहित्यस्य अनुपपत्तेरिति भावः । एवं शङ्कामुत्थाप्य तदुत्तरत्वेन विमतमित्यादिमूलग्रन्थमवतारयितुमाह ॥ मैवमित्यादिना ॥ सूचितत्वादिति ॥ 'यदि आश्रयोऽसिद्धः स्यात्तदा किमाश्रया विमतिः स्यात् ? यदि वा विशेषणमनारम्भणीयत्वमप्रसिद्धं स्यात्तदा कोटेरप्रसिद्धत्वान्न विमतिः स्यात् । अस्ति चेयम् । ततो न निराश्रयत्वादि' इति विमतग्रहणेन

सूचितत्वादित्यर्थः ॥ सूचनायेति ॥ 'यदि दृष्टान्त आपाद्येन आपादकेन वा विकलः स्यात्तदा सम्प्रतिपत्तिर्न स्यात् । अस्ति चेयम् । ततो नापाद्यवैकल्यादि' इति सूचनायेत्यर्थः ॥ बौद्धादिशास्त्रमिति ब्रूयादिति ॥ सम्प्रतिपन्नशब्देनोक्तमेव बौद्धादिशास्त्रं बौद्धादिशास्त्रशब्देनैव ब्रूयादित्यर्थः ॥ वेदस्याप्रणेतव्यत्वादिति ॥ अपौरुषेयत्वादिति भावः ॥ बौद्धादिशास्त्रश्रवणस्यापीति ॥ अश्रोतव्यत्वं नाम श्रवणायोग्यत्वम् । तच्च अश्रवणगम्यत्वम् । तच्च न बौद्धादिशास्त्रेऽस्ति । तेन आपाद्यविकलो दृष्टान्त इत्यर्थः । मैवं, प्रेक्षावदिति ॥ बौद्धादीनां तत्त्वविषये प्रेक्षाराहित्यस्योभयवादिसिद्धत्वेन तच्छास्त्रे प्रेक्षावद्भिस्तदुक्तफलसाधनत्वबुद्ध्या श्रूयमाणत्वादिलक्षणं प्रेक्षावदुपादेयत्वं नास्तीति अनुपादेयत्वलक्षणमनारम्भणीयत्वमस्त्येवेत्यर्थः ।

ननु श्रुतितन्मीमांसापक्षीकारेणानारम्भणीयत्वसाधने बाधापसिद्धान्तौ स्यातामित्यत आह ॥ स्यादिति ॥ प्रतिज्ञावाक्यशेष इति ॥ नन्वेवमप्यनारम्भणीयत्वस्य आपाद्यत्वेन बाधाद्यभावेऽप्यापादकस्य आचार्येणानुक्तत्वात् न्यूनत्वं स्यादित्याशङ्क्य 'न हि ब्रह्मात्मैक्यस्य याथार्थ्यं तत्पक्षे' इत्युत्तरग्रन्थे जीवब्रह्मैक्यायाथार्थ्यं वदताऽऽचार्येण 'यदि जीवब्रह्मणोरैक्यस्य प्रतिपादकं स्यात्' इत्यापादकस्य सूचितत्वान्न न्यूनत्वमिति भावेन सूचितापादकाध्याहारपूर्वकं तर्कस्वरूपमाह ॥ तथा चेति ॥

नन्वापादकमध्याहृतं चेत् 'अन्यथाप्रतिपादकत्वात्' इत्यस्य वैयर्थ्यं नाम दोषः स्यादित्याशङ्क्य घटकोक्त्यर्थत्वान्न तस्य वैयर्थ्यमिति भावेनाह ॥ आपादकमेवेति ॥ अयमर्थः– ऐक्यप्रतिपादकत्वमात्रेण नाऽनारम्भणीयत्वमापादयितुं शक्यम् । भेदप्रतिपादकत्व इव ऐक्यप्रतिपादकत्वेऽपि आरम्भणीयत्वोपपत्त्या अप्रयोजकत्वादित्याशङ्क्य तत्परिहाराय आचार्येण 'स्यादेतदेवं, यद्यैक्यप्रतिपादकत्वेन साक्षात् अनारम्भणीयत्वमापाद्येत । न चैवम् । किं तु, 'शास्त्रं यद्यैक्यप्रतिपादकं स्यात् तर्हि वक्ष्यमाणन्यायेन

ऐक्यस्यासत्यत्वात् अन्यथा प्रतिपादकं स्यात् । यदि च अन्यथाप्रतिपादकं स्यात् तदा अनारम्भणीयं स्यात्' इति अन्यथाप्रतिपादकत्वप्रसञ्जनद्वारा । एवं च नाप्रयोजकत्वम् । भेदप्रतिपादकत्व इवाभेदप्रतिपादकत्वे यथार्थप्रतिपादकत्वाभावात् । प्रत्युत अन्यथा प्रतिपादकत्वात् । तस्य च अनारम्भणीयत्वप्रयोजकत्वेन बौद्धादिशास्त्रे क्लृप्तत्वात् । क्लृप्तप्रयोजकसद्भावेऽपि प्रयोज्यानङ्गीकारे व्याघातादिति भावेन अन्यथा प्रतिपादकत्वादित्युक्तम् । एवं चानेन हेतुवाक्येन ऐक्यप्रतिपादकत्वलक्षणमापादकं आपाद्यापादनसमर्थत्वरूपापादकत्वाकारेण विव्रियत इति न हेतुवाक्यस्य वैयर्थ्यं नाम दोष इति ॥ उत्तरत्रेति ॥ ननु यद्यद्वैतपरं इत्यादिना अस्यैव हेतुवाक्यस्य वैयर्थ्ये शङ्किते तत्परिहाराय प्रवृत्ते 'नैवमभिप्रायसद्भावात्' इत्यादावित्यर्थः ।

**श्रीनिवासतीर्थीयटिप्पणी**

॥ तन्मीमांसाभिरिति ॥ तदर्थनिश्चायकन्यायग्रथनात्मिकाभिरित्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम् ॥

॥ न चैतदित्यादि ॥ अज्ञानपरिकल्पितत्वरूपमिथ्यात्वाभावे चेश्वरनिष्ठसार्वज्ञादेः जीवनिष्ठदुःखादेश्च सत्यत्वापत्त्या विरुद्धधर्माधिकरणत्वेन जलानलवत् जीवेश्वरयोः भेद एव स्यादिति भावः ॥ कथमेवमुच्यत इति ॥ अखिलाज्ञानमतं ध्वांतसममिति कथमुच्यत इत्यर्थः ॥ न चैतदिति ॥ ऐक्यप्रतिपादकत्वमेव नास्ति । तथा अप्रतिभासादिति भावः । ननु कथमप्रतिभासः? ऐक्यपरतया श्रुतितन्मीमांसाशास्त्रं व्याख्यास्यामीति चेत्तत्राह ॥ तत्परतयेति ॥ विषयीभूतमिति ॥ धर्मिभूतमित्यर्थः ॥ निराश्रयत्वादिदोषेति ॥ आश्रयासिद्ध्यादिदोषेत्यर्थः । आदिपदेन सिद्धसाधनत्वाप्रसिद्धविशेषणत्वयोः ग्रहणम् ॥ सूचितत्वादिति ॥ यदि वेदादिकमेव न स्यात्तर्हि आरंभणीयत्वानारंभणीयत्वाभ्यां विमतिः किमाश्रया स्यात्, किं धर्मिणी स्यात्, कुत्र स्यादिति यावत् । यदि

वाऽनारंभणीयत्वं सिद्धमप्रसिद्धं वा स्यात्तर्हि आरंभणीयत्वानारंभणीयत्वाभ्यां कथं विमतिः स्यात् । एकस्याः कोटेः सिद्धत्वादप्रसिद्धत्वाच्चेत्यर्थः। अस्ति चेयम् । तस्मान्निराश्रयत्वादीति विमतग्रहणेन सूचितमित्यर्थः ॥ आपाद्यवैकल्यादीति ॥ आदिपदेनाश्रयहीनत्वग्रहणम् ॥ दोषेति ॥ दृष्टांतदोषेत्यर्थः ॥ सूचनायेति ॥ वक्ष्यमाणरीत्या आपाद्यमनारंभणीयत्वं बौद्धशास्त्रे न स्यात्, तदा केन धर्मेण संप्रतिपत्तिः स्यात् । यदि बौद्धशास्त्रमेव न स्यात्, तर्हि आवयोरनारंभणीयत्वेन संप्रतिपत्तिः कुत्र स्यात् । अस्ति चेयं तस्मान्नापाद्यवैकल्यादीति संप्रतिपन्नग्रहणेन सूचितमित्यर्थः ॥ अश्रोतव्यत्वादिकमिति ॥ अत्राऽदिपदेन अनुपादेयत्वग्रहणम् ॥ अप्रणेतव्यत्वादिति ॥ अपौरुषेयत्वादिति भावः ॥ दर्शनादिति ॥ तथा च आपाद्यवैकल्यमिति भावः । उपादेयत्वस्यापि दर्शनादित्यपि द्रष्टव्यम् । ननु विमतमनारंभणीयमिति वेदतन्मीमांसाशास्त्रस्यानारंभणीयत्वसाधने भवतामपसिद्धांतप्रमाणबाधौ स्यातामिति चेत्तत्राऽह ॥ स्यादिताति ॥ तथा च दूषणानुमानत्वान्न तत्रापसिद्धांतादिकं दोष इत्याशयः । यथोक्तम्– अतो न दूषणेऽपसिद्धांतादीति । नन्वेवमैक्यप्रतिपादकत्वरूपापादकस्य बहिरेवोक्तौ अन्यथाप्रतिपादकत्वादिति हेतुवाक्यस्य वैयर्थ्यरूपदोषः स्यादिति चेत्तत्राऽह ॥ आपादकमेवेति ॥ जीवब्रह्मैक्यप्रतिपादकत्वरूपापादकमेवेत्यर्थः । कथं विव्रियत इति चेत्तत्राऽह ॥ तच्चेति ॥ विवरणमित्यर्थः । विवरणप्रकारमिति यावत् ॥ उत्तरत्रेति ॥ ननु यद्यद्वैतपरमित्यादिना ग्रंथेनेत्यर्थः ।

## श्रीगुरुराजीयटिप्पणी

॥ तत्कथमिति ॥ वेदादेरैक्यपरत्वेऽप्यारम्भणीयत्वोपपत्तेरप्रयोजकत्वम् । अन्यथा भेदपरत्वेऽप्यनारम्भणीयत्वं स्यादित्यभिप्रायः। अश्रोतव्यत्वादिकं वेत्यत्रादिशब्देनाव्याख्येयत्वपरिग्रहः। बौद्धादिशास्त्रश्रवणस्यापि

दर्शनादित्युपलक्षणम्। ख्यात्याद्यर्थं तद्व्याख्यानस्यापि दर्शनादित्यपि द्रष्टव्यम्।

**मायावादपरशुः**

असहमान इति ॥ असह्यत्वप्रयुक्तव्यग्रचित्त आहेत्यर्थः ॥ एतेन– जीवब्रह्मणोरेकत्वमखिलस्याज्ञानकल्पिततया विना नोपपद्यत इत्ययुक्तम्। विरुद्धधर्माधिकरणत्वपरिहाराय सर्वासत्त्वस्य वक्तव्यत्वेनाज्ञानकल्पितत्वाभिधानस्यासङ्गतत्वात्। अज्ञानकल्पितत्वेऽपि सर्वज्ञत्वासर्वज्ञत्वरूपधर्माणां स्वरूपानुपमर्देन विरुद्धधर्माधिकरणत्वापरिहारात्। किञ्चाज्ञानकल्पितत्वं नामाज्ञानजन्यत्वमेव नान्यत्। अनिरूपणात्। सर्वज्ञत्वाल्पज्ञत्वादिधर्माणामज्ञानजन्यत्वे को लाभः ? स्वस्वप्रयोजकप्रयोज्यत्वे का हानिः ? येनाज्ञानकल्पितत्ववचनं युक्तं स्यात्। अपि च सर्वज्ञत्वाल्पज्ञत्वादीनि प्रमाणसिद्धानि परस्परं विरुद्धानि च भवन्त्येव। नैतानि कल्पितानीत्युक्तिमात्रेण स्वभावभूतं विरोधं त्यजन्ति। मातङ्गस्य मशक इत्युक्तिमात्रेण स्वभावहानिप्रसंगात्। ततश्च राजानो हस्त्यश्वरथं बिभृयुः, किंतु मशकिन इत्युक्तिमात्रेण कृतिनो भवेयुः। किंच यदि सर्वज्ञत्वाल्पज्ञत्वादीन्यज्ञानकल्पितानि तर्हीदानीमेव ज्ञानेनाज्ञाननिवृत्यनन्तरमिवैक्यं कुतो न भवेत्। कल्पितानां धर्माणामविरोधस्य मायावादिनैवोक्तत्वात्। अपि च विरुद्धधर्माणां भेदकारकत्वेनैक्यविरोधः, उत भेदज्ञापकत्वेन? नाद्यः। भेदस्य जीवेश्वरस्वरूपत्वेन विरुद्धधर्मजन्यत्वाभावात्। न द्वितीयः। भेदे श्रुतिसद्भावेन ज्ञापकविशेषाभावमात्रेण ज्ञाप्याभावाभिधानायोगात्। तथा च कथमेवंविधं दुष्टवचनं मायावादिनः संभावितमिति निरस्तम्। भ्रान्तचित्तस्य दुष्टार्थप्रतिपादनेऽसंभावनाभावात् ॥ तत्परतया व्याख्यान इति ॥ अत्र व्याख्यानग्रहणं परेण वेदादीनां तत्परत्वमङ्गीकृतमिति नापादकासिद्धिरिति ज्ञापनार्थम्। एतेन तत्परत्वेऽनारंभणीयत्वं स्यादित्येतावतैव पूर्णत्वाद्व्याख्यानग्रहणं व्यर्थमिति

निरस्तम् । ऐक्यपरत्वे पराङ्गीकारेण सत्येवानारंभणीयत्वस्यापादितत्वात् ।। कथमितीति ।। ऐक्यप्रतिपादकत्वेऽप्यारंभणीयत्वसंभवादैक्यप्रतिपादकत्वं कथमनारंभणीयत्वप्रयोजकमित्यत आहेत्यर्थः ।

।। आरंभणीयत्वानारंभणीयत्वाभ्यामिति ।। ननु वादिप्रतिवादिभ्यां श्रुतितन्मीमांसाशास्त्रस्यारंभणीयत्वाङ्गीकारादारंभणीयत्वानारंभणीयत्वाभ्यां विमतमित्युक्तमयुक्तम् । प्रत्युतैक्यपरत्वभेदपरत्वाभ्यां विप्रतिपत्तेः सद्भावा-दैक्यपरत्वभेदपरत्वाभ्यां विमतमित्येव वक्तव्यमिति चेत्, न ब्रूमो वयमारंभणीयत्वानारंभणीयत्वाभ्यां वादिप्रतिवादिविप्रतिपन्नमिति । येनो-क्तदोषः स्यात् । किं नाम बौद्धबादरायणविप्रतिपन्नमिति । अत एव मिथ्यात्वानुमानखंडनटीकायामिव वादिप्रतिवादीति नोक्तम् । बौद्धबादरा-यणविप्रतिपत्यभिधानस्य कोपयोग इति चेन्न । बादरायणशिष्येण मायावादिना तद्विप्रतिपन्नं वेदाद्यनारंभणीयत्वं नाङ्गीकर्तुमुचितमित्यापा-द्यानिष्टत्वज्ञापनार्थत्वात् । ननु शास्त्रशब्देन श्रुतितन्मीमांसाग्रहणे प्रतिपत्तिलाघवमिति शास्त्रशब्देनैव श्रुतितन्मीमांसाग्रहणं कार्यमित्यत आह ।। शास्त्रमिति ।। ननु शास्त्रशब्देन वेदादिशास्त्रग्रहण इष्टापादनमेतत्स्यादि-त्यनुपपन्नं प्रसज्यत इति चेत्, न ब्रूमो वयमिष्टापादनं भवतीति । किं नाम शास्त्रशब्दस्य विवक्षितार्थमजानतो मंदस्येष्टापादनमिति भ्रमः स्यादिति ।। तर्हीति ।। वेदादीति विस्पष्टमेवोच्यतां किं विमतग्रहणमिति भावः । एतेन शास्त्रशब्देन वेदादिकं गृहीत्वा शङ्कासमाधानयोः कृतत्वात् पुनः शङ्काऽनुपपन्नेति परास्तम् । पूर्वं शास्त्रशब्देन श्रुत्यादिग्रहणमाशङ्क्य दूषितम् । इदानीं तु वेदादीति विस्पष्टशब्देन श्रुत्यादिग्रहणमाशङ्क्य दूष्यत इति भेदः ।। विमतिग्रहणेनेति ।। नकेवलं मायावाद्यनिष्टत्वं सूचितम् । अपि तु निराश्रयत्वादिदोषपरिहारसूचनं च प्रयोजनमस्यास्तीति वेदादीति पक्षनिर्देशमकृत्वा विमतमिति पक्षनिर्देशः कृत इति भावः । यदि वेदादिकमप्रसिद्धं स्यात्तर्ह्याश्रयाभावाद्विमतिर्न स्यात् । अस्ति च

विमतिस्तस्माद्वेदादिकं नाप्रसिद्धमिति, तथा यद्यनारंभणीयत्वमप्रसिद्ध स्यात्तर्हि विमतिर्न स्यात् । अस्ति च विमतिस्तस्मान्नाप्रसिद्धमिति सूचन-प्रकारो द्रष्टव्यः । यद्यपि प्रतिवादिनो नाश्रयासिद्ध्यादिशङ्का, तथापि तटस्थस्य शङ्का भवत्येवेति विम्तमिति वचनं सार्थकम् । एवं तटस्थस्यापाद्यवैकल्यादिशङ्कापरिहाराय संप्रतिपन्नमित्युक्तमिति भावः। एतेन बौद्धादिशास्त्रे आपाद्यमेव नास्तीति यः शङ्कते स संप्रति-पन्नमित्युक्तिमात्रेण न समाहितो भवेत् । अतिप्रसङ्गादिति परास्तम् । बौद्धादिशास्त्रे आपाद्यमस्तीति न मयाङ्गीक्रियत इति तटस्थेनाशङ्किते त्वदीयापाद्यासम्मतिर्न दूषणं, वादिप्रतिवाद्यसम्मतेरेव प्रयोजकत्वात्त-स्याश्वेहाभावादिति सूचने समाधानस्य संभवात् । ननु विमतमना-रम्भणीयमिति साधनमयुक्तम् । बाधादपसिद्धांताच्चेत्यत आह ।। स्यादिति प्रतिज्ञावाक्यशेष इति ।। आपादनमेवेदं न तु साधनमिति भावः ।। नन्विदमापादनमयुक्तम् । आपादकाभावादित्यत आह ।। तथा चेति ।। एवं तर्हि हेत्वभिधानं व्यर्थमित्यत आह । आपादकमेवेति ।। अप्रयोजक-त्वशंकानिरासेनापादकनिष्ठं प्रयोजकत्वं हेतुवाक्येन स्फुटीक्रियत इति भावः।

टीका

मायावादस्य अनारम्भणीयत्वसाधनम्

**अथ वा वेदतन्मीमांसादिकमैक्यपरतया व्याकुर्वन् मायावादि-प्रणीतं शास्त्रमेव पक्षीकृत्य तस्यानारम्भणीयत्वं वेदादेस्तत्परत्व-निरासाय साध्यते ।**

मायावादस्यान्यथाप्रतिपादकत्वसमर्थनम्

**कथमन्यथाप्रतिपादकत्वं विमतस्य शास्त्रस्येत्यत आह—**

मायावादखण्डनम्

## न हि ब्रह्मात्मैक्यस्य याथार्थ्यं तत्पक्षे ।

टीका

**अन्यथाप्रतिपादकत्वं ह्ययथार्थप्रतिपादकत्वम् । ब्रह्मात्मनोरेकत्वं च शास्त्रविषयतया परस्याभिमतम् । न तत् परमार्थभूतम् । अतोऽन्यथाप्रतिपादकत्वं सिद्धम् ।**

**मन्दारमञ्जरी**

पूर्वव्याख्याने स्यादित्यस्य 'यद्यैक्यप्रतिपादकं स्यात्' इत्यापादकस्य अध्याहर्तव्यत्वात्, अन्यथाप्रतिपादकत्वात् इत्यस्य च हेतुतया प्रतीयमानस्य आपादकविवरणपरतया व्याख्येयत्वात् तत्रापरितोषादन्यथा व्याचष्टे ।। अथ वेति ।। ननु 'वेदादिकमैक्यपरं चेत् अनारम्भणीयं स्यात्' इत्यापादिते वेदादेः पराभिप्रेतविषयादिनिराकरणं सिद्ध्येत् । न तु मायावादिशास्त्रस्य अनारम्भणीयत्वे साधिते । अतस्तत्साधनमसङ्गतमित्याशङ्क्याऽह ।। वेदादेस्तत्परत्वनिरासायेति ।। वेदादेरैक्यपरत्वसाधकस्य मायावादस्य अनारम्भणीयत्वे साधिते वेदादेरैक्यपरत्वसाधकाभावात् तत्परत्वं निरस्तं भवतीति भावः । नन्वन्यथाप्रतिपादकत्वे सिद्धे अनारम्भणीयत्वापादनं साधनं वा कर्तुं युक्तम् । तदेवासिद्धम् । न चैक्यपरत्वेन अन्यथाप्रतिपादकत्वसिद्धिः । भेदपरत्व इव ऐक्यपरत्वेऽपि अन्यथाप्रतिपादकत्वाभावोपपत्त्या अप्रयोजकत्वादिति शङ्कते ।। कथमन्यथाप्रतिपादकत्वमिति ।। एतदुत्तरतया मूलमवतारयति ।। अत आहेति ।।

'अन्यथाप्रतिपादकत्वं ह्ययथार्थप्रतिपादकत्वम्' इत्यादेरयं भावः– अन्यथाप्रतिपादकत्वं ह्यन्येन प्रकारेण प्रतिपादकत्वम् । प्रकारस्यान्यत्वं च वास्तवप्रकारापेक्षया । वास्तवश्च प्रकारो यथार्थ एवेति तदन्यस्य परमार्थसत्त्वाभावरूपायथार्थत्वनियमात् अयथार्थेन प्रकारेण प्रतिपादकत्वलक्षणमयथार्थपरत्वमेव अन्यथाप्रतिपादकत्वम् ।

एवं च अयथार्थमयथार्थतया प्रतिपादयत् अयथार्थप्रतिपादकत्वात् अन्यथाप्रतिपादकं स्यात् । यथार्थमयथार्थतया प्रतिपादयच्च अयथार्थ-परत्वाभावादन्यथाप्रतिपादकं न स्यादिति चोद्यं निरस्तम् । अयथार्थ-सम्बन्ध्ययथार्थत्वस्य प्रकारस्य यथार्थत्वेन अयथार्थमयथार्थतया प्रति-पादयतोऽपि अयथार्थेन प्रकारेण प्रतिपादकत्वरूपायथार्थपरत्वाभावात् । एवं यथार्थसम्बन्ध्ययथार्थत्वस्य प्रकारस्यापि अयथार्थत्वेन यथार्थ-मयथार्थतया प्रतिपादयतोऽपि अयथार्थेन प्रकारेण प्रतिपादकत्व-लक्षणायथार्थपरत्वसद्भावात् । एवं चास्माकं पक्षे भेदस्य सत्यत्ववत् परपक्षे ऐक्यस्य सत्यत्वाभावात्, प्रत्युत परन्यायेनैव अभेदमिथ्यात्वस्य वक्ष्यमाणत्वात् जीवाभेदरहितं ब्रह्मोद्दिश्य जीवाभिन्नमिति प्रतिपादयच्छा-स्त्रमयथार्थेन जीवाभेदेन प्रकारेण ब्रह्म प्रतिपादयतीति ऐक्यपरत्वमन्यथा-प्रतिपादकत्वं विना नोपपद्यत इत्यैक्यपरत्वेन अन्यथाप्रतिपादकत्वापाद-नात्मकतर्कस्य अप्रयोजकत्वाभावात् अन्यथाप्रतिपादकत्वं सिद्धम् । सिद्धे च अन्यथाप्रतिपादकत्वे तेन अनारम्भणीयत्वापादानात्मकतर्केऽपि नापा-दकासिद्धिः । नापि साधने हेत्वसिद्धिरिति ।

**श्रीनिवासतीर्थीयटिप्पणी**

एवं दूषणानुमानत्वमभिप्रेत्य व्याख्याय इदानीं साधनानुमानत्वमभि-प्रेत्यापि व्याख्याति ॥ अथवेत्यादिना ॥ नन्वैक्यपरश्रुतितन्मीमां-साशास्त्रानारंभणीयत्वसाधनस्यैव संगतत्वेन मायावादिशास्त्रानारंभणी-यत्वसाधनं कर्णे स्पृष्टे कटिं चालयतीति न्यायमनुसरतीत्याशंकापरि-हारायोक्तम्– वेदादेः तत्परत्वनिरासायेति । अत एवोक्तमैक्यपरतया व्याकुर्वदिति । तथा च तस्यानारंभणीयत्वसाधने वेदादेर्जीवब्रह्मभेदपरत्व-मेव सिद्ध्यति । ऐक्यपरत्वोपपादकोपायाभावादिति भावः ॥ कथमिति ॥ तथा च स्वरूपासिद्धिरिति भावः ।

**मायावादपरशुः**

।। कथमिति ।। विमतस्य शास्त्रस्य मायावादशास्त्रस्य । अन्यथा-प्रतिपादकत्वं कथम् । न कथमपि । असिद्धो हेतुरिति भावः ।। मूले न हीति । तत्पक्षे सूत्रकारपक्षे । ब्रह्मात्मैक्यस्य याथार्थ्यं न हि । अप्रामाणिकस्य प्रमाणविरुद्धस्य सूत्रकारानभिमतत्वात् । ततश्चासत ऐक्यस्य सत्त्वेन प्रमाणभूतवेदादिविषयत्वं प्रतिपादयतो मायावादिशास्त्र-स्यान्यथाप्रतिपादकत्वमिति मूलार्थः ।

एतेन, वेदादीनामैक्यपरत्वं मायावादिशास्त्रप्रतिपाद्यम् । अतस्तस्या-न्यथाप्रतिपादकत्वव्युत्पादनाय वेदादीनामैक्यविषयत्वमयथार्थमिति वक्त-व्यम् । न त्वैक्यस्यायथार्थत्वं वाच्यम् । ऐक्यस्यायथार्थत्वेपि वेदादीनां तत्परत्वस्य यथार्थत्वमात्रेण मायावादिशास्त्रस्य यथार्थप्रतिपादकत्वसंभवात् । अन्यथोन्मत्तवाक्यं शशशृंगादिसत्तापरमिति प्राज्ञवचनस्याप्यन्यथा-प्रतिपादकत्वप्रसङ्ग इति परास्तम् । ऐक्यगतशास्त्रविषयत्वस्यासत्त्वे तात्प-र्यात् । एतेनैवैक्यं ब्रह्मस्वरूपं सत्यमिति वदतो मायावादिनो मते ऐक्यस्य यथार्थत्वात् तत्पक्षे याथार्थ्यं नास्तीति कथनमयुक्तम् । तथा स्वपक्षेऽप्यैकस्य याथार्थ्यं नास्तीति तत्पक्ष इति वक्तव्यत्वात् । तथा विमतस्य जगतः परोक्तमिथ्यात्वसजातीयस्यैक्यमिथ्यात्वस्यान्यथा-प्रतिपादकत्वसमर्थनानुपयुक्तत्वेनैक्यस्य तत्कथनमयुक्तमित्युक्तं परास्तम् । तत्पक्ष इत्यस्य सूत्रकारपक्ष इत्यर्थकत्वात् ।। शास्त्रस्य विषयतयेति ।। वेदादिशास्त्रस्य विषयतया परस्याभिमतं तद्विषयत्वं न परमार्थभूतम् । वेदादिना ऐक्याप्रतिपादनात् । अतो मायावादादिशास्त्रस्यान्यथा-प्रतिपादकत्वं सिद्धमित्यर्थः ।

**टीका**

**पूर्वोक्ततर्के आपादकविवरणम्**

**ननु 'यद्यद्वैतपरं शास्त्रं स्यात् तदा अनारम्भणीयं प्रसज्येत' इति प्रसङ्गोक्तौ आपादकस्योक्तत्वात् पुनर्हेत्वभिधानं व्यर्थं स्यात् ।**

न चैतदेव आपादकाभिधानमिति वाच्यम् । तथासत्यन्यथाप्रतिपादकत्वादित्यस्य ब्रह्मात्मैक्यप्रतिपादकत्वादित्यर्थः स्यात् । तथा च दृष्टान्तानुपपत्तिः। न हि ब्रह्मात्मैक्यस्येत्युपपादनानुपयोगोऽसङ्गतत्वञ्चेति । मैवम् । अभिप्रायसद्भावात् । तथा हि– 'यद्यद्वैतमेव शास्त्रार्थः स्यात् तदा शास्त्रमनारम्भणीयं स्यात्' इत्युक्ते निमित्तनैमित्तिकभावस्य अस्फुटत्वात्, कथमित्याकाङ्क्षायां अन्यथाप्रतिपादकत्वादित्युक्तम् । 'यदि शास्त्रार्थोऽद्वैतं स्यात् तदा शास्त्रमन्यथाप्रतिपादकं स्यात् । ततश्च अनारम्भणीयं प्रसज्येत' इति ।

ब्रह्मात्मैक्यस्य शास्त्रार्थत्वे शास्त्रस्यायथार्थप्रतिपादकत्वसमर्थनम्

अद्वैतस्यैव शास्त्रार्थत्वे शास्त्रस्यायथार्थप्रतिपादकत्वं कथमित्यतो न हि ब्रह्मात्मैक्यस्येत्यभिहितम् । तत्रोपपत्तिः 'तत्पक्षे' इति। ऐक्यमेव शास्त्रार्थश्चेद् ब्रह्मातिरिक्तं सर्वमपरमार्थभूतं स्यात्। ऐक्यं च ब्रह्मव्यतिरिक्तत्वादपरमार्थभूतम् । तत्प्रतिपादकं च शास्त्रं कथमन्यथाप्रतिपादकं न भवेदिति ।

मन्दारमञ्जरी

यदुक्तं, 'तच्चोत्तरत्र प्रदर्शयिष्यामः' इति तद्दर्शयितुं शङ्कते तावत् ॥ नन्विति ॥ यद्यपि 'विमतं' इत्यादिपूर्वग्रन्थस्थहेतुवाक्यस्य वैयर्थ्यशङ्कातत्परिहारौ 'न हि ब्रह्मात्मैक्यस्य' इति व्याख्यानात् प्रागेव कर्तव्यौ । तथापि 'न हि ब्रह्मात्मैक्यस्य' इत्युपपादनानुपयोग इति शङ्काशेषस्य 'यद्यद्वैतमेव शास्त्रार्थः स्यात्' इत्यादिना कृतस्य तत्परिहारस्य च 'न हि' इत्यादिग्रन्थार्थमज्ञात्वा ज्ञातुमशक्यत्वात् तद्व्याख्यानानन्तरं तौ कृताविति बोद्धव्यम् ॥ प्रसङ्गोक्ताविति ॥ साधनपक्षे तु अन्येन हेत्वनभिधानात् 'अन्यथाप्रतिपादकत्वात्' इत्यनेनैव च तदभिधानाच्च

तस्य वैयर्थ्यं शङ्कितुं शक्यमिति भावः । ननु अन्यथा प्रतिपादकत्वात् इत्येतदेव आपादकाभिधानमस्तु, न त्वापादकमध्याहर्तव्यम् । श्रुतपरित्यागेन अश्रुताध्याहारायोगादित्याशङ्क्याह ॥ न चेति ॥ तथा सतीति ॥ वेदादेरैक्यप्रतिपादकत्वं निराकुर्वता तत्रैवानिष्टस्यापादनीयत्वात् 'अन्यथाप्रतिपादकत्वात्' इत्यस्य ब्रह्मात्मैक्यप्रतिपादकत्वादित्येवार्थो वाच्यः । न च शब्दशक्तेरभावः । अन्यथा सिद्धान्त्यभिप्रेतजीवब्रह्मभेदापेक्षया प्रकारान्तरेण अभेदेन प्रतिपादकत्वादित्येवं 'अन्यथाप्रतिपादकत्वात्' इत्यस्य ब्रह्मात्मैक्यप्रतिपादकत्वपरतया व्याख्यातुं शक्यत्वादिति भावः ॥ तथा च दृष्टान्तानुपपत्तिरिति ॥ 'यथा सम्प्रतिपन्नम्' इत्यनेन आचार्येण बौद्धादिशास्त्रं दृष्टान्तीकृतम् । तदनुपपत्तिः । ब्रह्मात्मैक्यप्रतिपादकत्वलक्षणापादकस्य तत्राभावात् । तथा च 'यथा सम्प्रतिपन्नम्' इति पूर्वग्रन्थविरोधः स्यादित्यर्थः ॥ न हि ब्रह्मात्मैक्यस्येत्युपपादनानुपयोग इति ॥ ऐक्यपरत्वमात्रस्य अनारम्भणीयत्वापादकत्वे ऐक्यस्य सत्यत्वेऽपि तदनपायात् ऐक्यायथार्थत्वोपपादनस्य आपादकासिद्ध्यादिपरिहारेऽनुपयोगः । तथा च 'न हि' इत्यस्योत्तरग्रन्थस्य वैयर्थ्यं स्यादित्यर्थः ॥ असङ्गतत्वं चेति ॥ ऐक्यपरत्वानारम्भणीयत्वयोः प्रयोज्यप्रयोजकभावाभावात्तेन तदापादनमप्रयोजकत्वादसङ्गतम् असम्बद्धमिति युक्तिविरोधश्च स्यादित्यर्थः ।

केचित्तु, 'उपपादनानुपयोगोऽसङ्गतत्वं च' इति समानाधिकरणमिदम् । तथा चोपपादनानुपयोगरूपासङ्गतत्वं स्यादित्यर्थः । चशब्दश्च दृष्टान्तानुपपत्तिसमुच्चयार्थ इति व्याचक्षते । अन्ये तु, 'अन्यथा प्रतिपादकत्वात्' इत्यस्य ऐक्यप्रतिपादकत्वादित्येतदर्थप्रतिपादने शक्त्यभावात् तथा अर्थकथनस्य असङ्गतत्वमिति व्याकुर्वते ।

॥ यद्यद्वैतमेवेति ॥ तथा च 'यदि वेदादिकं' इत्यत्र अनारम्भणीयत्वरूपापाद्य सामानाधिकरण्यसिद्ध्यर्थमैक्यपरत्वमापादकीकृतम् ।

अत्र तु 'सत्यां व्याप्तौ वैयधिकरण्यं न दोषः' इति अन्यत्र समर्थितत्वादैक्यस्य वेदादिविषयत्वं साक्षान्निराकर्तुमद्वैतस्य शास्त्रार्थत्वमेव आपादकीकृतमित्यदोषः ।

।। निमित्तनैमित्तिकभावस्यास्फुटत्वात् कथमित्याकाङ्क्षायामिति ।। 'यद्यग्निर्न स्यात् तर्हि धूमोऽपि न स्यात्' इत्यादौ 'यद्यग्न्यभावेऽपि धूमः स्यात् तर्हि कारणाभावेऽपि कार्याङ्गीकारे व्याघातः स्यात्' इत्याद्यनुग्राहकतर्कान्तरवत् प्रकृते 'यद्यैक्यपरत्वेऽप्यारम्भणीयत्वं स्यात् तदा इदमनिष्टमापद्येत' इति अनुग्राहकतर्कान्तराभावात् आपाद्यापादकभावस्य अस्फुटत्वात् कथमनारम्भणीयं स्यादित्याकाङ्क्षायामित्यर्थः ।। यदि शास्त्रार्थ इति । ऐक्यस्य शास्त्रार्थत्वेन अन्यथाप्रतिपादकत्वापादनात्मकस्तर्कः, तेन च अनारम्भणीयत्वापादनात्मा अन्यस्तर्क इति तर्कद्वयमेतत् । तथा च 'यद्यद्वैतं शास्त्रार्थः तदा अन्यथाप्रतिपादकत्वप्रसङ्गात् शास्त्रमनारम्भणीयं प्रसज्येत,' इति प्रसङ्गरूपो हेतुः 'अन्यथाप्रतिपादकत्वात्' इत्यनेनोक्त इति भावः ।। प्रसज्येतेतीति ।। इतिशब्दस्य इत्यभिप्रायसद्भावादित्यन्वयः । तेन हेत्वभिधानं न व्यर्थमिति शेषः।

एवं च 'न हि ब्रह्मात्मैक्यस्य' इत्युपपादनानुपयोगदोषोऽपि नास्तीति भावेन शङ्कानिरासरूपं तदुपयोगं शङ्काप्रदर्शनपूर्वकमाह ।। अद्वैतस्यैवेत्यादिना ।। 'यत्र यत्र अद्वैतस्य शास्त्रार्थत्वं तत्र तत्र शास्त्रस्य अयथार्थत्वं' इति व्याप्तेरभावात् कथमेतदिति चोद्याभिप्रायः । परिहाराभिप्रायस्तु प्रतिपाद्यस्याद्वैतस्य यथार्थत्वाभावात् 'यत्र यथार्थाप्रतिपादकत्वे सति प्रतिपादकत्वं तत्रायथार्थप्रतिपादकत्वं' इति सामान्यव्याप्तिरस्तीति ।। तत्रोपपत्तिस्तत्पक्ष इतीति ।। तत्र ऐक्यस्यायथार्थत्वे उपपत्तिः तत्पक्षे ऐक्यपक्षे इत्यनेन प्रदर्शितेत्यर्थः ।

प्रदर्शनप्रकारमेवाह ।। ऐक्यमेव शास्त्रार्थश्चेदिति ।। जीवब्रह्मैक्यस्य कर्तृत्वभोक्तृत्वप्रमातृत्वादिविरुद्धधर्ममिथ्यात्वं विना अनुपपत्तेः, प्रमातृत्वादिमिथ्यात्वस्य च प्रमेयादिमिथ्यात्वेन विना अनुपपत्तेः ऐक्यनिर्वाहार्थं

ब्रह्मव्यतिरिक्तं सर्वमपरमार्थभूतं वक्तव्यमित्यर्थः । यद्वा, सर्वस्य परमार्थत्वे सर्वज्ञत्वासर्वज्ञत्वादिविरुद्धधर्माणामपि परमार्थत्वापत्त्या ऐक्यानुपपत्तेः ऐक्यनिर्वाहार्थं ब्रह्मव्यतिरिक्तं सर्वमपरमार्थभूतं वक्तव्यमित्यर्थः । यद्वा, परेण ब्रह्मात्मैक्यशब्दोपलक्षितस्य सजातीयविजातीयस्वगतनानात्व-राहित्यरूपस्यैक्यस्य शास्त्रार्थत्वेन अङ्गीकारात् तस्य च ब्रह्मव्यति-रिक्तसर्वमिथ्यात्वं विना अनुपपत्तेस्तन्निर्वाहार्थं ब्रह्मव्यतिरिक्तं सर्वमपर-मार्थभूतं वाच्यमित्यर्थः । अस्तु ब्रह्मव्यतिरिक्तसर्वमपरमार्थभूतम् । किं प्रकृत इत्यत आह ॥ ऐक्यं चेति ॥ अव्यतिरेकपक्षस्य दूषयिष्यमाणत्वान्न ब्रह्मव्यतिरिक्तत्वात् इत्यस्यासिद्धिरिति द्रष्टव्यम् । ननु ऐक्यस्यापरमार्थ-त्वेऽपि शास्त्रस्यान्यथाप्रतिपादकत्वं कथमुपपादितं भवतीत्यत आह ॥ तत्प्रतिपादकं चेति ॥ अत्र इतिशब्दस्य इति अनेन प्रकारेण उपपत्तिः प्रदर्शितेति पूर्वेणान्वयः ।

### श्रीनिवासतीर्थीयटिप्पणी

शास्त्रविषयतया शास्त्रप्रतिपाद्यतया यदुक्तं तच्चोत्तरत्र प्रदर्शयिष्याम इति तत् प्रदर्शयितुं शङ्कते ॥ नन्विति ॥ आपादकस्य अद्वैतपरत्वरूपस्य ॥ एतदेवेति ॥ अन्यथाप्रतिपादकत्वादित्येतदेवेत्यर्थः ॥ दृष्टांतानुपपत्ति-रिति ॥ बौद्धशास्त्रे ब्रह्मैक्यप्रतिपादकत्वरूपोपपादकाभावात् साधनवैकल्य-मित्यर्थः ॥ उपपादनानुपयोग इति ॥ कथं ब्रह्मात्मैक्यप्रतिपादकत्वं विमतस्य शास्त्रस्येति शङ्कायां न हि ब्रह्मात्मैक्यस्य याथार्थ्यमित्युपपाद-नानुपयोगरूपासंगतिरित्यर्थः । दृष्टांतानुपपत्तिसमुच्चयार्थश्चशब्द इत्यव-गन्तव्यम् । यद्वा, ननु कथमैक्यप्रतिपादकत्वं विमतस्य शास्त्रस्येत्येवं शङ्कायां न हि ब्रह्मेति वाक्यं प्रवृत्तमिति योजनायां सङ्गत्यभावेऽपि प्रकारांतरेण सङ्गतिं वक्ष्यामीति चेत्तत्राऽह ॥ असङ्गतत्वं चेति ॥ निमित्तनैमित्तिकभावस्येति ॥ प्रयोज्यप्रयोजकभावस्येत्यर्थः । अद्वैतस्य शास्त्रार्थत्वं निमित्तं प्रयोजकम्. अनारंभणीयत्वं नैमित्तिकं प्रयोज्यम् ।

तद्भावस्यास्फुटत्वादित्यर्थः । तथा चाप्रयोजकत्वमित्याशयः ॥ कथमिति ॥ आपादनं कथमित्यर्थः ॥ ततश्चेति ॥ अन्यथाप्रतिपादकत्वेना-नारंभणीयत्वरूपे द्वितीयतर्के संप्रतिपन्नमित्युक्तं बौद्धशास्त्रमत्र दृष्टांत इत्यवगन्तव्यम् ॥

**श्रीगुरुराजीयटिप्पणी**

न केवलं प्रसङ्गोक्तावापादकस्योक्तत्वात् पुनर्हेत्वभिधानानर्थक्यमेव दोषः, किं नाम, न हि ब्रह्मात्मैक्यस्येत्युपपादनानुपयोगोऽपीत्याह ॥ न हीति ॥ उपपादनानुपयोगोऽसङ्गतत्वं चेति ॥ समानाधिकरणमिदम् । ततश्चानुपयोगरूपासङ्गतत्वं स्यादित्यर्थः ।

**मायावादपरशुः**

नन्वस्त्वनुमानपरतया विमतमिति मूलव्याख्यानम् तर्कपरतया कृतं पूर्वव्याख्यानमनुपपन्नम् । अन्यथाप्रतिपादकत्वादित्यस्य वैयर्थ्यप्रसंगादिति भावेन शङ्कते ॥ नन्विति ॥ पुनःशब्दो वाक्यालङ्कारे । प्रसंगस्य मूलाभिप्रेतत्वे आपादकस्यान्यथाप्रतिपादकत्वादित्यस्माद्भिन्नस्योक्तप्रा-यत्वाद्धेत्वभिधानं व्यर्थं स्यादिति भावः । एतेन पूर्वमेकस्य हेतोरनुक्तत्वात् पुनरित्यनुपपन्नम् । तथाऽऽपादकस्योक्तत्वादित्यप्यनुपपन्नं, मूलकृता तदनभिधानादिति परास्तम् । आपादकमेवान्यथाप्रतिपादकत्वादित्यनेन हेतुवाक्येन विव्रियत इति पूर्वमुक्तत्वाद्वैयर्थ्यशङ्काऽनुपपन्नेत्याशंक्य निषेधति ॥ न चैतदिति ॥ एतदेव । अन्यथाप्रतिपादकत्वादित्येतदेव । आपादकविवरणमिति न वाच्यमित्यर्थः ॥ तथा सतीति ॥ विवरणवि-व्रियमाणरूपत्वेन सार्थक्यस्योक्तत्वेन वैयर्थ्यशङ्केयमनुपपन्नेति परास्तम् । भवदुक्तविवरणरूपत्वमयुक्तमिति मन्यमानस्य शङ्कासंभवात् ॥ तथा चेति ॥ बौद्धशास्त्रे आपादकाभावाद्दृष्टान्तानुपपत्तिः । अन्यथाप्रति-पादकत्वादित्यस्यैक्यप्रतिपादकत्वादित्यर्थकत्वेनायथार्थ प्रतिपादकत्वादित्यर्थ-

कत्वाभावात् अयथार्थप्रतिपादकत्वस्य न हिब्रह्मात्मैक्यस्येत्युपपादनस्यानु-पयोगः, असङ्गतत्वमापादकस्याप्रयोजकत्वं चेति दूषणसद्भावाद्धेतुवा-क्येनैवापादकमुच्यत इति नचवाच्यम् । तथाच हेतुवाक्यस्यापादकविवरण-रूपत्वमाह ॥ यदीति ॥ निमित्तनैमित्तिकभावः कथमित्याकांक्षानिवृ-त्त्यर्थमन्यथाप्रतिपादकत्वादित्युक्तमित्यर्थः । कथमेवमाकांक्षानिवृत्तिरित्यत आह ॥ यदि शास्त्रार्थ इति ॥ अनारंभणीयत्वेऽन्यथाप्रतिपादकत्वं प्रयोज-कमिति तावदविवादम् । ऐक्यप्रतिपादकत्वेचान्यथाप्रतिपादकत्वमवर्जनीयम् । एवं चानारंभणीयत्वव्याप्यान्यथाप्रतिपादकत्वव्याप्यस्यानारंभणीयत्वव्या-प्यत्वम् । तद्व्याप्यव्याप्यस्य तद्व्याप्यत्वात् । एतदेव ह्यापादकविवरण-रूपत्वं हेतुवाक्यस्य यदापादकस्यापाद्यं प्रति प्रयोजकत्वस्फुटीकरणम् । नापि दृष्टान्तानुपपत्तिर्यदन्यथाप्रतिपादकं तदनारंभणीयमिति व्याप्तिग्रहणा-र्थमेव दृष्टान्ताभिधानादिति भावः ।

न हि ब्रह्मात्मैक्यस्येत्यस्यानुपयोगशङ्कां परिहर्तुमुपक्रमते ॥ अद्वैतस्यैवेति ॥ पूर्वं मायावादिशास्त्रस्यान्यथाप्रतिपादकत्वं कथमित्या-शङ्कानिवर्तकत्वेन न हिब्रह्मात्मैक्यस्येति मूलमवतारितम् । इदानीं वेदादि-शास्त्रस्याद्वैतप्रतिपादकत्वे कथमन्यथाप्रतिपादकत्वमित्याशङ्कानिवर्तकत्वेन तदेव मूलमवतारितमिति भेदः ॥ तत्रोपपत्तिरिति ॥ सूत्रकारपक्ष इत्यनेनैक्यस्य मिथ्यात्व उपपत्तिः सूचिता । सूत्रकारपक्षे ऐक्यं तावदसत् । तस्य भेदवादित्वात् । सर्वज्ञस्य यद्यथा मतं तत्तथैवेति व्याप्ते-रैक्याप्रसरादिति भावः। एतेनैक्यं ब्रह्मस्वरूपमेव यथार्थमित्यस्य माया-वादिपक्षत्वात्तत्पक्ष इत्यनेनैक्यमिथ्यात्व उपपत्तिः सूचितेत्ययुक्तमिति परास्तम् । इतःपरं टीकायां श्रूयमाणं ''एक्यमेव शास्त्रार्थश्चेद् ब्रह्माति-रिक्तं सर्वमपरमार्थभूतं स्यात् । ऐक्यं च ब्रह्मव्यतिरिक्तत्वादपरमार्थभूतम् । तत्प्रतिपादकंच शास्त्रं कथमन्यथाप्रतिपादकं न भवेत्'' इति वाक्यं प्रक्षिप्तं, न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । ब्रह्मव्यतिरिक्तत्वेन सिद्धस्यान्यथाप्रतिपादकत्वानुपपादकत्वाच्च । न हि परमतेऽनिर्वचनीय-प्रतिपादकमन्यथाप्रतिपादकम् । परेण प्रातिभासिकमर्थं व्यावहारिकत्वेन विषयीकुर्वत एवान्यथाप्रतिपादकत्वांगीकारात् ।

टीका

ब्रह्मात्मैक्यस्य स्वरूपातिरेके सत्यत्वे च अद्वैतहानिदोषः

अथ ब्रह्मात्मैक्यं तत्स्वरूपातिरिक्तमपि परमार्थसदङ्गीक्रियते तदा तेनैव द्वैतापत्तेरद्वैतपरं शास्त्रमित्यस्य हानिः स्यादित्याह–

मायावादखण्डनम्

अद्वैतहानेः स्वरूपातिरेके ।

टीका

ब्रह्मात्मैक्यस्येति वर्तते । यथार्थ्ये सतीति शेषः ।

ब्रह्मात्मैक्यस्य स्वरूपानतिरेके स्वमतरीत्या सिद्धसाधनतादोषः

स्यादेतत्, ऐक्यं परमार्थसदेव । किं तु ब्रह्मस्वरूपानतिरिक्तमेव । यथाह– "तच्चाद्वैतं 'ब्रह्मैवेदं सर्वं' इति श्रुत्यर्थेन सहैक्यमापन्नं हि ब्रह्मैव स्यात्" इति । तथा च कथं तत्प्रतिपादकं शास्त्रमयथार्थप्रतिपादकं स्यादित्यत आह–

मायावादखण्डनम्

अनतिरेके स्वप्रकाशत्वादात्मनः सिद्धसाधनता ।

टीका

शास्त्रस्येति शेषः । यद्यद्वैतं ब्रह्मस्वरूपानतिरिक्तं स्यात् तदा शास्त्रस्य सिद्धार्थबोधकत्वं प्रसज्येत । बोध्यस्याऽत्मनो ब्रह्मस्वरूपत्वात् । तस्य च स्वप्रकाशत्वेन नित्यसिद्धत्वात् । अतः सिद्धसाधनतापरिहाराय ऐक्यस्य स्वरूपातिरेकेऽङ्गीक्रियमाणे अन्यथाप्रतिपादकत्वमेवेति ।

**मन्दारमञ्जरी**

।। तदा तेनैव द्वैतापत्तेरिति ।। यदि ब्रह्मात्मैक्यं स्वरूपातिरिक्तमपि परमार्थसत् स्यात्, अत एव दृश्यत्वजडत्वपरिच्छिन्नत्वादिकमपि परमार्थसत् स्यात्, तेनैव द्वारेण समानन्यायतया दृश्यत्वादिमान् दुःखादिविरुद्धधर्मोऽपि सन् स्यादिति जीवब्रह्मणोर्द्वैतापत्तेस्तदद्वैतपरं शास्त्रं इत्यस्य हानिः स्यादित्यर्थः । अथवा, यदि ब्रह्मात्मैक्यशब्दोपलक्षितं सजातीयविजातीय-स्वगतनानात्वराहित्यं ब्रह्मस्वरूपातिरिक्तमपि परमार्थसत् स्यात् तदा तेनैव द्वितीयेन सद्वितीयत्वापत्तेः त्रिविधनानात्वराहित्यपरं शास्त्रमित्यस्य हानिः स्यादित्यर्थः ।। याथार्थ्ये सतीति शेष इति ।। स्वरूपातिरेकमात्रेण नाद्वैतहानिरापादयितुं शक्या । अतिरेकेऽपि तस्य मिथ्यात्वे अद्वैतहान्य-भावात् । ततो याथार्थ्ये सतीति विशेषणीयमित्यर्थः ।

**अद्वैतस्याभावरूपत्वेन नाद्वैतहानिरिति शङ्का तन्निरासश्च**

ननु अद्वैतस्य ब्रह्मातिरिक्तत्वेऽपि याथार्थ्येऽपि च नाद्वैतहानिः । तस्य द्वैताभावरूपत्वात् । मया च 'अभावानां प्रामाणिकत्वेऽपि सदद्वैता-व्याकोपात्' इति वदता अभावद्वैतस्याङ्गीकारादिति चेन्न । तथात्वे ह्यन्योन्याभावरूपभेदोऽपि सत्यत्वेन अङ्गीकार्यः स्यात् । किं च 'एकमेवा-द्वितीयं' इति द्वितीयमात्रनिषेधानुपपत्तिः । तस्य भावरूपद्वितीयनिषेधपरत्वे च अभावरूपद्वितीयनिषेधपरत्वमेव किं न स्यात् । अपि च, सत्यस्य तस्याभावस्य आत्मातिरिक्तत्वेन दृश्यत्वाद्यवश्यम्भावात् मिथ्यात्वसाधकस्य दृश्यत्वादिहेतोस्तत्र व्यभिचारः स्यादित्यलं विस्तरेण ।।

स्वोक्तार्थे खण्डनकारसंमतिमाह । यथाऽऽहेति ।। श्रुत्यर्थेन सहैक्यमापन्नमिति ।। श्रुत्यर्थभूतमित्यर्थः । तथा च 'ब्रह्मैवेदं सर्वं' इति श्रुत्यर्थभूतं सर्वस्य ब्रह्ममात्रत्वलक्षणं यदद्वैतं तद् ब्रह्मैव । अद्वैतस्य ब्रह्मातिरिक्तत्वे सर्वस्य ब्रह्ममात्रत्वानुपपत्तिप्रसङ्गात् । तस्य च श्रुतिसिद्धत्वादिति संमतिग्रन्थार्थः । नन्वद्वैतस्य स्वप्रकाशब्रह्मस्व-

रूपानतिरिक्तत्वेऽपि शास्त्रस्य कथं सिद्धसाधनता ? स्वप्रकाशभूतब्रह्म-स्वरूपस्यैक्यस्य ब्रह्म प्रति प्रकाशमानत्वेऽपि जिज्ञासुं शास्त्रेण बोध्यं जीवं प्रत्यप्रकाशमानत्वात् । अन्यथा भवतामपि पक्षे ब्रह्मणः स्वप्रकाश-त्वात् जिज्ञासुं जीवं प्रति ब्रह्म प्रतिपादयतः शास्त्रस्य सिद्धसाधनत्वं दुर्वारमित्याशङ्क्याह ॥ बोध्यस्याऽत्मनो ब्रह्मस्वरूपत्वादिति ॥ बोध्यस्य शास्त्रेणानुशासनीयस्य, शास्त्रश्रवणे अधिकृतस्येत्यर्थः, जीवस्य ब्रह्मस्व-रूपत्वात् ब्रह्म प्रति प्रकाशमानस्यैक्यस्य जीवं प्रत्यपि प्रकाशमानत्वात् सिद्धसाधनत्वं स्यात् । अस्माकं पक्षे तु जीवस्य ब्रह्मणः सकाशाद्भिन्नत्वान्न दोष इत्यर्थः । एवं च स्वप्रकाशत्वाद् ब्रह्मणः इति वक्तव्ये यदाचार्येण स्वप्रकाशत्वादात्मन इत्युक्तं तद् ब्रह्मणो बोध्यजीवा-भेदप्रतिपादनार्थमिति व्याख्यातं भवति ।

अन्ये तु, 'मृदात्मनो घटस्य' इत्यादाविव आत्मशब्दस्य स्वरूपार्थ-त्वमङ्गीकृत्य बोध्यस्य शास्त्रविषयस्य अद्वैतस्य यदात्मा स्वरूपं तस्येति वैयधिकरण्येन, बोध्यस्य

शास्त्रविषयस्यात्मनोऽद्वैतस्वरूपस्येति सामानाधिकरण्येन वा व्या-चक्षते ॥ स्वरूपातिरेकेऽङ्गीकार्य इति ॥ स्वरूपातिरिक्तस्य सत्यत्वेऽद्वैत-हानिप्रसङ्गात् तस्य मिथ्यात्वे अङ्गीकार्य इति शेषः ।

### श्रीनिवासतीर्थीयटिप्पणी

तेनैवेति ॥ ब्रह्मस्वरूपातिरिक्तेन परमार्थसता ऐक्येनैवेत्यर्थः ॥ द्वैतापत्तेरिति ॥ द्वितीयसत्यवस्तुसद्भावापत्तेरित्यर्थः । अद्वैतपरं सत्यभूत-द्वितीयवस्त्वभावपरम् । स्वोक्तार्थे खंडनकारसंमतिमाह ॥ यथाऽऽहेति ॥ तच्चाद्वैतं ब्रह्मैव स्यादित्यन्वयः । कुतः । यतोऽस्मदुक्तं प्रमेयं ब्रह्मैवेदं सर्वमिति श्रुत्यर्थेन सहैक्यमापन्नं प्राप्तम् । अस्माभिरैक्यस्य ब्रह्मात्म-कत्वमुच्यते । श्रुत्या च सर्वस्य ब्रह्मात्मकत्वमभिधीयते । सर्वमध्ये चैक्यं

पतितमिति तस्यापि ब्रह्मात्मकत्वं प्राप्तम् । तथा चास्मदुक्तं प्रमेयं श्रुत्युक्तं च प्रमेयमेकमेव जातमित्यर्थः । तथा चास्मदुक्तप्रमेये श्रुत्यानुकूल्य-मप्यस्तीति भावः ॥ बोध्यस्येति ॥ श्रुतिबोध्यस्य जीवस्येत्यर्थः ॥ नित्यसिद्धत्वादिति ॥ मामहं जानामीति साक्षिप्रत्यक्षेणेत्यर्थः । तदेवोप-पादयति ॥ स्वविषयप्रकाशत्वमिति ॥ परेण च नैतादृशं स्वप्रकाशत्वमंगीकर्तुं शक्यं, विशेषानंगीकारेण कर्तृकर्मत्वविरोधादिति भावः ॥

**मायावादपरशुः**

शिष्याणां शास्त्रानुक्तप्रमेये केनचिदुक्ते तदुचितं दूषणं योजयित्वा देयम् । न तु तूर्ष्णीं स्थातव्यमिति शिक्षणाय मायावादिनानुक्तमेव प्रमेयं केनचिदुक्तमिति सिद्धवत्कृत्य तद्दूषणमुत्तरमूलेनाहेत्याह ॥ अथेति ॥ अंगीक्रियते केनचिदुन्मत्तेनेति शेषः । एतेन मायावादिनैतत्पक्षानङ्गी-कारात्तद्दूषणं व्यर्थमिति परास्तम् ।

मायावादी शंकते ॥ स्यादेतदिति ॥ तच्चाद्वैतमिति ॥ ब्रह्मैवेदं सर्वमितिश्रुत्यर्थैनैक्यमापन्नं श्रुत्यर्थभूतम् इदं सर्वमिति सर्वशब्देन गृहीत-मिति यावत् । एवंभूतमद्वैतं ब्रह्मैव स्यादित्यर्थः । ब्रह्मैवेदं सर्वमिति श्रुतिवाक्यं ब्रह्माद्वैतबोधकम् । तत्र ये सर्वशब्दगृहीतास्तेषां ब्रह्मैक्यं श्रुत्यर्थः । घटादयो न तत्र सर्वशब्दगृहीता इति न तेषां ब्रह्मैक्यं ज्ञानानंदादिवत् । ऐक्यमपि सर्वशब्दगृहीतमिति तस्य ब्रह्मैक्यमिति भावः। एतेनैतच्छ्रुतेर्जगतो ब्रह्मव्यतिरेकेणासत्त्वप्रतिपादकत्वेन ब्रह्मतादात्म्यविषये एतत् श्रुत्युदाहरणमयुक्तम् । अन्यथा घटादीनामपि ब्रह्मतादात्म्यं स्यात् । अविशेषादिति निरस्तम् । ननु शास्त्रस्य सिद्धार्थबोधकत्वमित्ययुक्तम् । तस्य स्वात्मानं प्रति सिद्धत्वेऽपि बोध्यं प्रत्यसिद्धत्वात् । न हि स्वप्रकाशत्वशब्दस्य सर्वान् प्रति प्रकाशत्वमर्थः । येनोक्तदोषः स्यात् । किंनाम स्वात्मानं प्रत्येव प्रकाशमानत्वमर्थः । एवं च बोध्यं प्रति

शास्त्रस्याज्ञातज्ञापकत्वात् सार्थक्यमित्यत आह ॥ बोध्यस्यात्मन इति ॥ त्वत्पक्षे बोध्यस्याप्यात्मनो ब्रह्मस्वरूपत्वात्तं प्रति ब्रह्मात्मकमैक्यं सिद्धमिति सिद्धसाधनताऽवर्जनीयेति भावः ॥ तस्य चेति ॥ तस्यैक्यस्य स्वप्रकाशत्वेन बोध्यं प्रति नित्यसिद्धत्वात्सिद्धसाधनतेति भावः । उपसंहरति ॥ अत इति ॥ ऐक्यस्य ब्रह्मस्वरूपत्वांगीकारे सिद्धसाधनताया अपरिहार्यत्वात् । यदि परस्यैक्यं स्वरूपातिरिक्तमित्यंगीकार्यं स्यात्, यदि तेनांगीक्रियत इति यावत्, तर्हि मा भूत् सिद्धसाधनता । तथापि सकलश्रुतिस्मृतिविरुद्धत्वेन सत्त्वेन बादरायणस्यानभिमतं जीवब्रह्मैक्यं सत्त्वेन प्रतिपादयतः शास्त्रस्यान्यथाप्रतिपादकत्वप्रयुक्तमनारंभणीयत्व-मेवमवर्जनीयमेवेति भावः । एतेनैक्यस्य परकीयमिथ्यात्ववर्णनं व्यर्थम् । तस्य मिथ्यात्वेऽपि घटादिवत् स्वरूपसद्भावेन तत्प्रतिपादकत्वेनान्यथा-प्रतिपादकत्वाभावात् । अन्यथा यूपाहवनीयादिप्रतिपादकस्यापि वाक्य-स्यान्यथाप्रतिपादकत्व- प्रसंग इति परास्तम् । अत्यंतासत ऐक्यस्य सत्त्वेन प्रतिपादकत्वादन्यथाप्रतिपादकत्वमित्यर्थस्य विवक्षितत्वात् । एतेनैवैक्यस्य श्रुतिस्मृतिविरुद्धत्वेनासत्त्वात् सत्त्वेन प्रतिपादयतिचेच्छास्त्रं तर्ह्यन्यथाप्रतिपादकं स्यादित्यनुक्तवैक्यं ब्रह्मस्वरूपातिरिक्तं, तस्य सत्यत्वेऽद्वैतहानिरिति मिथ्यात्वं वाच्यमिति वर्णनमयुक्तम् । एतादृश-मिथ्यात्वस्यान्यथाप्रतिपादकत्वसमर्थनानुपयुक्तत्वादिति निरस्तम् ।

टीका

**अयं च दोषः स्वमतरीत्यैवोक्त इति मन्तव्यम् । 'स्वविषय-प्रकाशत्वं स्वप्रकाशत्वम्' इति स्वमतेऽङ्गीकारात् ।**

परीत्या शास्त्रस्यैक्याप्रतिपादकत्वसाधनम्

परीत्या तु स्वप्रकाशत्वादात्मनः शास्त्रस्याप्रतिपादकत्वं स्यात् । 'अवेद्यत्वं स्वप्रकाशत्वम्' इत्यङ्गीकारादिति दूषणं द्रष्टव्यम् ।

**मन्दारमञ्जरी**

॥ अयं च दोषः स्वमतरीत्यैवोक्त इति मन्तव्यमिति ॥ यद्यपि परैः स्वग्रन्थेषु स्वप्रकाशात्ममात्रस्य स्वतः सिद्धिसम्भवेनेति, स्वतः सिद्धतायामपि तदुपपत्तेरिति, विज्ञानमेव स्वपरप्रकाशस्वभावं प्रकाशत इति, स्वभावभेदादेव च स्वात्मनि व्यवहारं कुर्यादिति च तत्र तत्र वदद्भिः स्वप्रकाशस्याऽत्मनः स्वकर्मत्वाभावेऽपि स्वजन्यव्यवहारविषयत्वयोग्यत्वलक्षणा स्वतः सिद्धिरिष्यते । तादृशात्माभिन्नं चाद्वैतं बोधयतः शास्त्रस्य सिद्धसाधनत्वं पररीत्यैव वक्तुं शक्यमिति परन्यायेन परमतनिराकरणपरतया स्वारस्येनैव मूलग्रन्थो व्याख्यातुं शक्यः । तथापि टीकाकारैः संविद्विषयताया एव स्वमतानुसारेण सिद्धिशब्दार्थत्वं मत्वा परेण संविद्विषयताया आत्मन्यनङ्गीकारात् संविद्विषयतालक्षणसिद्धेरात्मन्यभावात् सिद्धसाधनत्वं पररीत्या वक्तुमशक्यमिति भावेन स्वमतरीत्योक्त इत्युक्तमिति बोद्धव्यम् ॥ अवेद्यत्वं स्वप्रकाशत्वमित्यङ्गीकारादिति ॥

**चित्कर्मत्वाभावः स्वप्रकाशत्वमिति पक्षनिरासः**

ननु परैः चित्कर्मत्वाभावरूपमेवावेद्यत्वं स्वप्रकाशत्वमित्यङ्गीक्रियते । न तु वृत्तिव्याप्यत्वाभावरूपम् । न चात्मनश्चित्कर्मत्वाभावमात्रेण शास्त्रस्य तदप्रतिपादकत्वं वक्तुं शक्यम् । शास्त्रजनितवृत्तिव्याप्यत्वमात्रेण शास्त्रस्य तत्प्रतिपादकत्वोपपत्तेरिति चेत् सत्यमेवं परमतस्थितिः । तथापि चित्कर्मत्वाभावस्य स्वप्रकाशशब्दार्थत्वे घटादेरपि चिद्विषयत्वे सुखादिवज्ज्ञातैकसत्त्वप्रसङ्गेन तदभावावश्यम्भावेन तस्यापि स्वप्रकाशत्वापत्तिः । न च घटाद्यवच्छिन्नचैतन्यावरकाज्ञाननिवृत्त्यर्थं वृत्तेरपेक्षितत्वेन तस्य ज्ञातैकसत्त्वाभाव इति वाच्यम् । तत एव सुखादेरपि ज्ञातैकसत्त्वाभावप्रसङ्गात् । ननु सुखाद्यवच्छिन्नचैतन्यमज्ञानावृतमेव न भवतीति चेत् किमनावृतचैतन्यप्रदेशावच्छिन्नतयैव सुखदुःखादिकमुत्पद्यते ? किं वा

सुखाद्युत्पत्त्यनन्तरमेव तदवच्छिन्नं चैतन्यमनावृतं भवति? इति । नाद्यः । अनियतदेशानामन्तःकरणसम्बन्धिनामनन्तसुखादीनां नियतैकचैतन्यप्रदेशसम्बन्धितया उत्पत्त्यनुपपत्तेरनियतानन्तप्रदेशानामनावृतत्वे वक्तव्ये तत्प्रदेशसम्बन्धितयोत्पन्नानां घटादीनामपि ज्ञातैकसत्त्वप्रसङ्गात् । न द्वितीयः । तद्विषयकवृत्तेरेव तदज्ञाननिवर्तकतया दुःखादेरज्ञानानिवर्तकतया अज्ञाननिवृत्त्यर्थं दुःखादिविषयवृत्तेरङ्गीकार्यत्वेन घटादिवद्दुःखादेरपि ज्ञातैकसत्त्वानुपपत्तेः । तस्माद्दुःखादिकं ज्ञातैकसत् घटादिकं तु न तथेति व्यवस्थासिद्ध्यर्थं घटादौ चित्कर्मत्वाभावस्यावश्यं वक्तव्यतया चित्कर्मत्वाभावस्य स्वयंप्रकाशत्वरूपत्वे घटादेरपि स्वप्रकाशत्वापत्तेस्तत्परिहारार्थं वृत्तिव्याप्यत्वाभावः स्वप्रकाशत्वमिति वक्तव्यम् । तथा च शास्त्रस्य तत्प्रतिपादकत्वं न स्यादित्यापादनं विवक्षितमित्यदोषः ।

**मायावादपरशुः**

ननु सिद्धसाधनतेत्ययुक्तम् । चिन्मात्रस्य वेदांतजनितवृत्त्यविषयत्वेन वेदांतस्य तदप्रतिपादकत्ववदैक्याप्रतिपादकत्वादित्यत आह ॥ अयं च दोष इति ॥ स्वविषयप्रकाशत्वमिति ॥ अस्मन्मते स्वविषयप्रकाशत्वमेव स्वप्रकाशत्वम् । न तु वेदांतजन्यवृत्त्यविषयत्वम् । ततश्च तत्प्रतिपादकस्य वेदांतस्य ज्ञातज्ञापकत्वमिति भावः ॥ अवेद्यत्वमिति ॥ स्फुरणरूपत्वमेव, न तु वेदांतजनितवृत्तेरपि विषयत्वं स्वप्रकाशत्वमिति परेणांगीकारादिति भावः ।

टीका

आत्मस्वरूपसिद्धावप्यद्वैतासिद्धिशङ्कापरिहारौ ।

**ननु स्वप्रकाशतया आत्मस्वरूपस्य सिद्धत्वेऽप्यद्वैतादिविशेषाकारेणानधिगतत्वान्न शास्त्रस्य सिद्धसाधनत्वादिकम् । यथा खलु भवतां गुणगुणिनोरभेदेऽपि गुणिनः स्पर्शनेनोपलम्भे रूपस्यानधिगतिरेवमिति । अत आह–**

मायावादखण्डनम्

## निर्विशेषत्वादात्मनो नानधिगतो विशेषः ।

टीका

**स्यादेवं घटोपलम्भेऽपि तद्रूपानुपलब्धिः । यतो रूपं घटाभिन्नमपि तद्विशेषतया अङ्गीक्रियते, न तु तन्मात्रम् । न चैक्यमपि आत्माभिन्नं तद्विशेषः । येन आत्मनि सिद्धेऽप्यनधिगतमिति युक्तम् । आत्मस्वरूपस्य निर्विशेषत्वाङ्गीकारादिति ।**

मन्दारमञ्जरी

।। गुणगुणिनोरिति ।। यावद्द्रव्यभाविगुणगुणिनोरित्यर्थः। अयावद्द्रव्यभाविगुणगुणिनोः सिद्धान्ते अत्यन्ताभेदाभावेन दृष्टान्तीकरणानुपपत्तेरिति ।। तद्विशेषतया अङ्गीक्रियत इति ।। भेदप्रतिनिधिरूपविशेषाश्रयीभूतधर्मतया अङ्गीक्रियत इत्यर्थः । निर्विशेषत्वस्य ब्रह्मण्यसिद्धत्वान्निर्विशेषत्वादिति कथमाचार्येणोक्तमित्याशङ्क्य तद्व्याख्यातं टीकाकृता निर्विशेषत्वाङ्गीकारादिति । परेण निर्धर्मकत्वस्याङ्गीकारादेव भेदप्रतिनिधिरूपविशेषाश्रयभूतधर्मराहित्यस्याप्यङ्गीकारादित्यर्थः ।

श्रीनिवासतीर्थीयटिप्पणी

।। अद्वैतादिविशेषाकारेणेति ।। अद्वैतरूपः कश्चन विशेषाकारः तेन रूपेणेत्यर्थः। सिद्धसाधन त्वादिकमित्यत्राऽदिपदेनाप्रतिपादकत्वादिग्रहणम् । भवतां मते । दृष्टांतदार्ष्टांतिकयोर्वैषम्यमुपपादयति ।। स्यादेवमिति ।। तद्विशेषतयेति ।। तद्धर्मतयेत्यर्थः ।। तन्मात्रमिति ।। घटनात्यंताभिन्नमित्यर्थः । खंडितत्वेन भेदाभेदसद्भावादिति भावः । तद्विशेषस्तद्धर्मः । यद्वा, गुणगुणिनोरिति यावद्द्रव्यभाविगुणगुणिनोरित्यर्थः । अयावद्द्रव्यभाविनोर्गुणगुणिनोः सिद्धांते अत्यंताभेदाभावेन दृष्टांतीकरणानुपपत्तेः। तद्विशेषतयाऽङ्गीक्रियत इति ।। भेदप्रतिनिधिरूपविशेषाश्रयनिष्ठतद्धर्मतयेत्यर्थः ।। न चैक्यमपीति ।। आत्माभिन्नं विशेषाश्रयनिष्ठधर्मरूपं

नेत्यर्थः । येन तद्विशेषत्वांगीकारेण अनधिगतः ऐक्यरूपो विशेषः ॥ निर्विशेषत्वेति ॥ निर्धर्मकत्वेत्यर्थः ।

**मायावादपरशुः**

॥ नन्विति ॥ यथा भवतां गुणगुणिनोरभेदेऽपि गुणिनः स्पार्शन-नोपलंभेऽपि गुणस्य रूपादेः स्पार्शनेनानुपलंभः, एवं स्वप्रकाशतया ब्रह्मस्वरूपस्य सिद्धत्वेऽप्यद्वैतादिविशेषाकारेणासिद्धत्वादद्वैतप्रतिपादकस्य शास्त्रस्य न सिद्धसाधनत्वम् । तथा ब्रह्मणो वृत्त्यविषयत्वात्तदात्मकैक्यस्य वृत्त्यविषयत्वेन शास्त्रस्य यदप्रतिपादकत्वं तदपि नास्ति । पृथिव्या घ्राणाविषयत्वेऽपि गंधस्य तद्विषयत्ववद् ब्रह्मणो वृत्त्यविषयत्वेऽप्यैक्यस्य तत् सम्भवादित्यत आहेति भावः ।

टीका

अज्ञाननिवृत्तावद्वैतस्य स्वतःसिद्धिरिति शङ्का तत्परिहारश्च ।

**अथापि स्यात् । भवेदिदं शास्त्रस्य सिद्धसाधनत्वादि यदि शास्त्रं साक्षादद्वैतं प्रतिपादयतीति ब्रूमः । न चैवम् । किं नाम? आवरणभूताज्ञानमात्रं निवर्तयतीति । निवृत्ते त्वावरणे अद्वैतं स्वत एव सिद्धम् । तदुक्तं– 'सिद्धं तु निवर्तकत्वात्' इति । तत्राह–**

मायावादखण्डनम्

**सिद्धत्वात्स्वरूपस्य विशेषाभावाच्च नाज्ञानं कस्यचिदावरकम् ।**

टीका

**स्यादेवं शास्त्रस्य सिद्धसाधनतापरिहारः । यदि परमते अज्ञानमावरणं सम्भवेत् । न चैतत्सम्भवति । आवरणं ह्याव्रियमाणेन व्याप्तम् । न चाज्ञानस्य तदस्ति । तथा हि– किमज्ञानमात्मस्वरूपस्यावरणं स्यात्? उत तद्विशेषस्य? नाद्यः । तस्य**

**स्वप्रकाशत्वेन नित्यसिद्धत्वात् । न द्वितीयः । तदभावात् । तथा च व्यापकाभावाद्व्याप्यमावरणमपि न सम्भवतीति न तन्निवर्तकत्वेन शास्त्रस्यासिद्धसाधनत्वं भवतीति ।**

**मन्दारमञ्जरी**

॥ सिद्धं तु निवर्तकत्वादितीति ॥ ऐक्यस्य स्वप्रकाशात्मस्वरूपत्वेन सदा प्रकाशमानत्वेऽपि शास्त्रस्यारम्भणीयत्वं सिद्धमेव । शास्त्रस्याज्ञानमात्रनिवर्तकत्वादित्यर्थः। नाद्यः,तस्य स्वप्रकाशत्वेन नित्यसिद्धत्वादिति ।

**भासमानस्यैव अज्ञानविषयत्वमिति शङ्का तत्परिहारश्च ।**

ननु कथमेतत्? प्रकाशमानेऽपि विषये परैरज्ञानावरणाङ्गीकारात् । यथोक्तं– 'प्रतिभासमानमेवाज्ञानव्यावर्तकम्' इति । युक्तं च प्रतिभासमानस्याज्ञानविषयत्वम् । तथा हि– इदमहं न जानामीति विषयावच्छिन्नमज्ञानमनुभूयते । तत्रावच्छेदको विषयो ज्ञातो न वा ? न चेत् कथं तदवच्छिन्नाज्ञानज्ञानम् ? अवच्छेदकाज्ञाने अवच्छिन्नज्ञानायोगात् । ज्ञातश्चेत् सिद्धं भासमानेऽप्यज्ञानम् । न चावच्छेदको विषयः सामान्यतो ज्ञायते, विशेषतस्तु न ज्ञायत इति युक्तम् । सामान्याकारस्य ज्ञातत्वादेवाज्ञानविषयत्वाभावेनाज्ञानावच्छेदकत्वानुपपत्तौ विशेषाकारस्यैवावच्छेदकत्वे तत्प्रतिभासावश्यंभावात् ।

एतेन, विशेषोऽपि 'अस्ति कश्चिद्विशेषः' इति सामान्यतो ज्ञायते । विशेषतस्तु न ज्ञायत इति निरस्तम् । अत्रापि पूर्वोक्तप्रकारेण दूषणप्रवृत्तेः । तस्मात् स्वयंप्रकाशत्वेन भासमानस्याप्यात्मस्वरूपस्याज्ञानमावरणं भविष्यतीति चेत् । उच्यते । परेणापि 'नास्ति, न प्रकाशते' इत्यादिव्यवहारसिद्ध्यर्थं आवरणमङ्गीक्रियते । यथोक्तं– ''नास्ति न प्रकाशते इत्यादिव्यवहारालम्बनयोग्यत्वस्य व्यवहारदर्शनादेव कल्प्यमानस्य'' इति । तथा च भासमाने 'नास्ति न प्रकाशते' इत्यादिव्यवहाराभावात्

किमावरणेन ? किं च यद्यज्ञातमपि भासेत तर्ह्यज्ञः पुमान् यत् येनाकारेण न जानाति तत्तेनाकारेण विविच्य वदेत् । न चावच्छिन्नज्ञानस्यावच्छेदकज्ञानपूर्वकत्वनियमादज्ञानप्रकाशार्थमज्ञातप्रकाशो वाच्य इति युक्तम् । यथा अन्यत्रावच्छिन्नसत्त्वस्यावच्छेदकसत्त्वपूर्वकत्वनियमेऽपि आरोपितरूप्याद्यभावसत्त्वस्य न रूप्यादिसत्त्वपूर्वकत्वं तत्पूर्वकत्वे रूप्याद्यभावसत्त्वस्यैवायोगात् तथा अन्यत्रावच्छिन्नज्ञानस्यावच्छेदकज्ञानपूर्वकत्वनियमेऽपि अज्ञातावच्छिन्नाज्ञानज्ञानस्य नाज्ञातज्ञानपूर्वकत्वम् । अज्ञातस्य ज्ञाने अज्ञानस्यैवायोगादिति कल्पनात् । अन्यथा अन्यत्रावच्छेदकावरकाज्ञाननिवृत्तावेवावच्छिन्नज्ञाननियमदर्शनात् प्रकृतेऽप्यर्थावच्छिन्नाज्ञानज्ञानार्थमवच्छेदकार्थावरकाज्ञाननिवृत्तिरप्यङ्गीकरणीया स्यात् । यथोक्तमन्यत्रास्माभिः–

> मोहभानार्थमज्ञातज्ञानं यदि च कल्प्यते ।
> अज्ञाते मोहहानिश्च तदर्थं किं न कल्प्यते ॥ इति ।

॥ यदि शास्त्रं साक्षादद्वैतमित्यादि ॥ ननु कथमेतत् ? शास्त्रस्य साक्षादैक्या प्रतिपादकत्वे तज्ज्ञानासंभवेन तदावरणभूताज्ञाननिवर्तकत्वमेव न स्यात् । ज्ञानस्यैवाज्ञाननिवर्तकत्वादिति चेन्न । साक्षादित्यस्य मुख्यत इत्यर्थकत्वात् । तथा च न शास्त्रस्यैक्यप्रतिपादन एव मुख्यतस्तात्पर्यम् । किन्नाम ? तत्प्रतिपादनद्वाराऽज्ञाननिवर्तन एवेति न कश्चिद्दोषः ॥ स्वत एवेति ॥ अनायासेनेत्यर्थः ॥ सिद्धं ज्ञातम् ॥ अत्रार्थे विवरणकारसंमतिमाह ॥ सिद्धं त्विति ॥ शास्त्रस्य सार्थक्यं सिद्धम् । कुतः? निवर्तकत्वात् आवरणभूताज्ञाननिवर्तकत्वादित्यर्थः ॥ व्यापकाभावादिति ॥ व्यापकीभूतस्य आव्रियमाणस्याभावादित्यर्थः ।

**मायावादपरशुः**

॥ अज्ञानमात्रं निवर्तयतीति ॥ शास्त्रं शबलब्रह्म प्रतिपादयति । तज्ज्ञानेनावरणभूताज्ञाने निवृत्तेऽद्वैतं स्वत एव सिद्धं भवति । न

त्वावरणनिवृत्तेः पुरा स्वप्रकाशत्वेऽपि सिद्धम् । ततश्च परंपरया शास्त्रमद्वैतसिद्ध्युपयोगीति शास्त्रमद्वैतप्रतिपादकमिति प्रवाद इति भावः ॥ सिद्धं तु निवर्तकत्वादितीति ॥ शास्त्रस्यारंभणीयत्वं सिद्धम् । अज्ञाननिवर्तकत्वेन प्रयोजनवत्त्वात्तद्वाराऽद्वैतसिद्ध्युपयोगित्वेन सविषयत्वाच्चेति भावः ॥ स्यादेवमिति ॥ शास्त्रस्याद्वैतपरत्वेति न सिद्धसाधनता । साक्षादद्वैताप्रतिपादकत्वात् । किं तु शास्त्रेऽसिद्धमर्थांतरं प्रतिपाद्याज्ञानं निवर्त्य प्रागसिद्धाद्वैतसिद्ध्युपयोगीत्येष परिहारः परमते भवेद्यद्यज्ञानमावरणं परमते भवेदिति भावः ॥ किमज्ञानमिति ॥ अज्ञानं निर्विशेषाभिन्नस्यैक्यस्यावरणमुत सविशेषाभिन्नस्यात्मस्वरूपस्यैक्यस्येत्यर्थः । एतेनैक्यस्याज्ञानमावरणमित्यभिहिते किं स्वरूपस्योत तद्विशेषस्येति विकल्पायोग इति परास्तम् ॥ तस्येति ॥ स्वप्रकाशात्मना निर्विशेषाभिन्नस्यैक्यस्य सदा सिद्धत्वान्नाज्ञानमावरकमिति वक्तुं शक्यमिति भावः ॥ तदभावादिति ॥ सविशेषाभिन्नस्यैवाभावादित्यर्थः ।

**टीका**

**शास्त्रस्य सिद्धसाधनत्वे अनुपादेयत्वाप्रामाण्यदोषौ ।**

**अस्तु तर्हि सिद्धसाधनता शास्त्रस्य । को दोष इति चेत् । परार्थत्वाच्छास्त्रस्य परसिद्धबोधने अनुपादेयत्वं स्यादित्येकः । अपरं चाह–**

मायावादखण्डनम्

**'अनधिगतार्थगन्तृ प्रमाणम्' इति च तन्मतम् ।**

**टीका**

**गन्तृशब्देनावगतिसाधनमुच्यते । अनधिगतेति स्मृत्यादिव्युदासार्थम् । शुक्तिरजतादिज्ञाननिरासायार्थग्रहणम् । अर्थस्य च यथावस्थितस्य विवक्षितत्वात् । अर्थस्य फलस्य च निवृत्त्यर्थं**

**गन्तृपदम् । तस्य च साधनपरत्वात् न कर्तर्यतिप्रसङ्गः । एतद्भाट्टानां प्रमाणलक्षणम् । 'व्यवहारे भट्टनयः' इति मायावादिभिरङ्गीकारात्तन्मतमित्युक्तम् । यदि शास्त्रमधिगतमेवार्थमवगमयेत्तदा प्रमाणलक्षणाभावादप्रमाणं प्रसज्येतेति ।**

**मन्दारमञ्जरी**

॥ को दोष इति ॥ धारावाहिकद्वितीयादिज्ञानवत्सिद्धबोधकत्वेऽपि प्रामाण्योपपत्तेरप्रामाण्यप्रसङ्गरूपो दोषो नास्तीत्यर्थः। अप्रामाण्यप्रसङ्गाभावेऽपि शास्त्रस्य प्रत्यक्षादिवत् स्वार्थत्वाभावात् परार्थत्वनियमात्सिद्धार्थबोधकत्वे अनुपादेयत्वप्रसङ्गरूपो दोषोऽस्तीत्याह ॥ परार्थत्वादिति ॥ भेदवाक्यानां तु यथा न सिद्धार्थबोधकत्वं तथाऽन्यत्रोपपादितम् ।

॥ स्मृत्यादिव्यवच्छेदार्थमिति ॥ अनधिगतार्थगन्त्रित्यत्र गन्तृशब्दस्यावगतिसाधनपरत्वादनधिगतार्थावगतिसाधनं प्रमाणमित्युक्तं भवति। तत्र चानधिगतपदाभावे अवगतिपदेन स्मृत्यादिरपि गृह्येत । तथा च तत्साधने संस्कारादावतिव्याप्तिः स्यात् । तन्निवृत्त्यर्थमवगतिपदेन स्मृत्यादिग्रहणं मा भूदित्येतदर्थमनधिगतपदमित्यर्थः । यद्वा, अवगतिपदेन ज्ञाततोच्यते। तत्साधनत्वं स्मृत्यादेरप्यस्तीति तन्निवृत्त्यर्थमनधिगतपदमित्यर्थः । अर्थशब्देन परमार्थसत्त्वस्य विवक्षितत्वात् तेन शुक्तिरजतादिज्ञानव्यवच्छेद इत्याह ॥ शुक्तिरजतादिज्ञाननिरासायेति ॥ एतदपि स्मृत्यादिव्युदासार्थमितिवद्व्याख्येयम् ॥ अर्थस्य फलस्य च निवृत्त्यर्थमिति ॥ अर्थस्यावगम्यत्वात् फलस्य चावगतिरूपत्वाद्गन्तृपदेन तद्व्यवच्छेद इत्यर्थः । करणे कर्तृत्वोपचारेण गन्तृपदेनावगतिसाधनस्य विवक्षितत्वान्न कर्तर्यतिव्याप्तिरित्याह ॥ तस्य चेति ॥ उपलक्षणं चैतत् । नापि साधनेऽसम्भव इत्यपि ग्राह्यम् ॥ प्रमाणलक्षणाभावादिति ॥

स्मृत्यादिव्यवच्छेदार्थमित्यस्य यदाऽस्माभिः कृता प्रथमव्याख्या तदा अस्य ग्रन्थस्य यथाश्रुत एवार्थः । यदा तु द्वितीयव्याख्या तदा शास्त्रजनितज्ञाने प्रमाणलक्षणाभावाच्छास्त्रमप्रमाणमप्रमाणज्ञानजनकं प्रसज्येतेत्यर्थः ।

**श्रीनिवासतीर्थीयटिप्पणी**

इति च तन्मतमित्यत्र चशब्दसूचितदोषमाह । परार्थत्वादिति । परप्रवृत्तिनिवृत्त्युपयोग्यर्थप्रतिपादकत्वादित्यर्थः । एको दोषः । ननु गंतृशब्दस्य कर्त्रर्थकतृच्प्रत्ययांतत्वेन अवगतिकर्तृवाचकतया करणे इंद्रियादावसंभव इत्यत आह ॥ गंतृशब्देनेति ॥ अवगतिसाधनमिति ॥ अवगतिकरणमित्यर्थः । अर्थशब्देन तथाभूतार्थ उच्यते । तथा चानधिगततथाभूतार्थावगतिकरणं प्रमाणमिति लक्षणमभिप्रेत्य क्रमेण पदानां कृत्यं दर्शयति ॥ अनधिगतेतीत्यादिना ॥ स्मृत्यादीति ॥ स्मृतेरादिः कारणं स्मृत्यादिः संस्कार इत्यर्थः । तथाच स्मृतेरपि तथाभूतार्थविषयकावगतित्वेन तत्कारणे संस्कारेऽतिव्याप्तिनिरासायानधिगतेति पदम् । स्मृतेस्तु पूर्वानुभूतार्थावगतिहेतुत्वेनानधिगतार्थावगतित्वाभावात्र तत्कारणे संस्कारेऽतिव्याप्तिरिति भावः । तथाभूतार्थपदकृत्यमाह ॥ शुक्तिरजतादिज्ञानेति ॥ शुक्तिरजतादिः ज्ञायते अनेनेति व्युत्पत्त्या शुक्तिरजतादिज्ञानशब्देन दुष्टेंद्रियं ग्राह्यम् ॥ गंतृपदमिति ॥ गंतृशब्दस्यावगतिकारणार्थत्वादित्यर्थः । तथा चानधिगततथाभूतार्थेत्युक्ते अर्थ एवातिव्याप्तिः स्यात् तदर्थम् अवगतिपदम् । तावत्युक्ते फलभूतायामवगतावेव अतिव्याप्तिः स्यात् तदर्थं कारणपदम् । तथा च गंतृपदेन तदुभयनिवृत्तिरिति भावः । एवं चेत्कर्तरि प्रमेये चातिव्याप्तिरित्यत आह ॥ तस्य चेति ॥ गंतृशब्दार्थांतर्गतस्य कारणपदस्येत्यर्थः ॥ न कर्तरीति ॥ इदमुपलक्षणम् । प्रमेयस्यापि विषयत्वेनावगतिकारणत्वात्तत्राप्यतिव्याप्तिपरिहारोऽनेन जायत इति ।

सत्यपि प्रमातरि प्रमेये च प्रमानुत्पत्तेः । तयोरविलंबेन प्रमोत्पादकत्वरूप-साधनत्वाभावादिति भावः । नन्वेतद्भाट्टानां लक्षणम् । अतः तन्मतमिति कथमुक्तमित्यत आह ॥ एतदिति ॥ नन्वेतावता प्रकृते किमायातमित्यतो मूलाभिप्रेतमापादनं दर्शयति ॥ यदीत्यादिना ॥

**श्रीगुरुराजीयटिप्पणी**

॥ को दोष इति ॥ धारावाहिकद्वितीयादिज्ञानसाधनचक्षुरादेरिव शास्त्रस्य सिद्धार्थबोधकत्वेऽपि यथार्थज्ञानसाधनतया प्रामाण्यसम्भवान्ना-प्रामाण्यप्रसङ्गो दोष इति भावः ॥ अनुपादेयत्वं स्यादित्येक इति । ततश्च प्रामाण्यमात्रस्य प्रयोजनवत्त्वेन व्याप्त्यभावेऽपि तद्विशेषस्य वाक्य-प्रामाण्यस्य प्रयोजनवत्त्वेन व्याप्तेः ''याथार्थ्यमेव प्रामाण्यमपि वाक्यं प्रयोजकम् । मानत्वमेति''त्यनुव्याख्यानसिद्धत्वेन प्रयोजनवत्त्वरूप-व्यापकाभावेन तद्व्याप्यस्य वाक्यप्रामाण्यस्याप्यभावप्राप्तेरप्रामाण्यप्रसङ्ग एव दोष इति भावः । यथा चैतत्सत्यपि यथार्थज्ञानसाधनमनुप्रमाणमिति अनुप्रमाणसामान्यलक्षणस्य नातिव्याप्तिस्तथाऽऽकर एव स्पष्टम् ॥ गन्तृ-शब्देनावगतिसाधनमुच्यत इति ॥ यद्यप्यनधिगतार्थविषयकं यथार्थज्ञानं प्रमा तत्कारणं च प्रमाणमिति फलकरणसाधारणमेवेदं लक्षणमिति अवगतितत्साधने उच्येते इति व्याख्यातुमुचितम् । तथाऽपि वेदादेरनु-प्रमाणस्यैव प्रकृतत्वात्तदनुरोधेनानुप्रमाणमात्रविषयतयेदं व्याख्यातमिति द्रष्टव्यम् ।

नन्वत्र गन्तृशब्दः किं तृनन्तोऽभिमतः, तृजन्तो वा । नाद्यः । तथा सति ''न लोकाव्ययनिष्ठाखलर्थतृनाम्'' इति तृन्योगे षष्ठीप्रतिषेधात् षष्ठीसमासासम्भवात् । नापि द्वितीयः । तथा सति, जयादित्यमतेन 'कर्तरि च' इति, यौक्तमतेन 'तृजकाभ्यां कर्तरि' इति षष्ठीसमासनिषेधादिति चेदत्र वदन्ति । अस्तु तावद् गन्तृशब्दः तृनन्त इत्याद्यः । न च तृन्योगेन 'लोक' इति षष्ठ्या निषेधात् षष्ठ्येव न

प्राप्नोति समासस्तु दूरे निरस्त इति वाच्यम् । कारकषष्ठीनिषेधेन तृन्योगे तस्याः समासासम्भवेऽपि शेषे षष्ठ्यनिषेधेन तस्याः समासे दोषाभावात् । अवश्यं चैतदेवं यत् 'न लोक' इति न षष्ठीमात्रनिषेधः । किन्तु कारकषष्ठ्या एवेति । अन्यथा 'ब्राह्मणस्य कुर्वन्' 'ओदनस्य पचन्' 'नरकस्य जिष्णुः' गुणैवो त्यादौ षष्ठ्यनुपपत्तिप्रसङ्गात् । अभ्युपेत्य चेदमुक्तम् । वस्तुतस्तु कारकषष्ठ्याः तृनन्तेन समासाश्रयणेऽपि न दोषः। तृजकाभ्यां कर्तरि इत्यत्र तृचः सानुबन्धकस्य निर्देशेन तृन् व्यावृत्त्यर्थेन 'लोक' इति निषेधस्यानित्यत्वज्ञापनेन प्रकृतेऽप्रवृत्तिप्रसङ्गात् । न ह्यसत्या षष्ठ्या समासप्रसङ्गोऽस्ति । अत एवाह न्यासकारःतृनन्तमेतत् । न लोकाव्ययेति षष्ठीनिषेधस्त्वनित्यः । त्रकाभ्यामिति वक्तव्ये तृचः सानुबन्धकस्य ग्रहणाज्ज्ञापकादिति ।

अस्तु वा गन्तृशब्दः तृजन्त इति द्वितीयः । न चोक्तरीत्यां कर्तरि चेति वा, तृजकाभ्यां कर्तरीति वा षष्ठीसमासनिषेधप्रसङ्गः । ताभ्यां कृल्लक्षणषष्ठीसमासस्यैव निषेधात् । इह च कर्मत्वस्याविवक्षया शेषत्वस्यैव च विवक्षया तत्सम्भवात् । ततश्च तृज्योगे 'कर्तृकर्मणोः कृति' इति प्राप्तषष्ठ्याः समासासम्भवेऽपि शेषषष्ठ्याः समासो युक्त एव । अत एवाह कैयटः "कथं तर्हि 'घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः' इति" शेषषष्ठ्या समासः इति । कर्मत्वविवक्षायामपि न कृल्लक्षणषष्ठीसमासानुपपत्तिः । जनिकर्तुः प्रकृतिः', 'तत्प्रयोजको हेतुश्च', जातिवाचको गुणोगुणिविशेषकः इति त्रिमुनिनिर्देशेनोक्तषष्ठीसमासनिषेधस्यानित्यत्वज्ञापनेन क्वचिदप्रवृत्तिसम्भवात् । अत एव 'भीष्मः कुरूणां भयशोकहन्ता', हितकारक इत्यादि प्रयोगा अप्युपन्ना इति संक्षेपः।

स्मृत्यादिव्युदासार्थमिति ॥ अत्र स्मृतेरादिरिति विग्रहाश्रयणेन स्मृतिहेतुसंस्कारव्युदासार्थमित्यर्थः । अवगतिसाधनत्वमात्रस्य स्मृतिरूपावगतिसाधनसंस्कारे सत्त्वेऽपि स्मृतेरधिगतावगतित्वेन अनधिगतावगति-

साधनत्वस्य तत्राभावान्न संस्कारेऽतिव्याप्तिरिति भावः । अर्थशब्दस्य परमार्थसत्परत्वात्तेन शुक्तिरजतादिज्ञानसाधनदुष्टेन्द्रियादिव्युदास इत्याह ॥ शुक्तिरजतादिज्ञाननिरासायेति ॥ अत्र ज्ञानशब्दस्य ज्ञायत अनेनेति व्युत्पत्त्या ज्ञानहेतुपरत्वाच्छुक्तिरजतादिज्ञानहेतुनिरासायेत्यर्थः । भाव-प्रकाशिकायां तु, क्वचिदवगतिपदेन ज्ञाततोच्यते । तत्साधनत्वं च स्मृत्यादेरप्यस्तीति तत्रातिव्याप्तिः स्यात् । तन्निवृत्यर्थमनधिगतपदमित्यर्थः। शुक्तिरजतादिज्ञाननिरासायेत्येतदपि स्मृत्यादिव्युदासार्थमिति व्याख्येय-मित्यादिको ग्रन्थः पठ्यते । स तु मूलकोशेष्वदर्शनात् बाधितार्थत्वाच्च लेखकदोषपतितः । तथा हि– 'न स्मृतेः ज्ञाततासाधनत्वमभ्युपगन्तुं शक्यम् । ज्ञाततामुपजनयदेव प्रमाणम् । यथा प्रत्यक्षादि । न च स्मृत्यादिनाऽर्थे ज्ञाततोपजनिः सम्भवति । अनुभवेनैव तस्य ज्ञातत्वात् । न हि छिन्ने छिदा पुनरुत्पद्यत' इत्यादिना, 'किञ्च संशयविपर्ययावपि ज्ञाततामुपजनयत इति त्वयाऽङ्गीकरणीयम् । समानन्यायत्वात्' इत्यादिना च सुधायाम्, 'न च भ्रमादावतिव्याप्तिः' अर्थानुसारिणो ज्ञातता-विशेषस्यैव प्रमात्वात् । भ्रमादिना च तदजननात् । इदमित्याकारेण जननेऽपि तत्र प्रामाण्यानभ्युपगमात् । ज्ञाते पुनर्ज्ञातताऽनुदयेन न स्मृतावतिव्याप्तिरित्यादिना प्रमाणलक्षणटीकायां स्मृतेः संशयविपर्ययोश्च ज्ञाततासाधनत्वाभावस्य व्युत्पादितत्वेन तत्साधनत्वस्य तदुभयविरुद्ध-त्वादिति द्रष्टव्यम् ।

नन्वेतद् भाट्टानां प्रमाणलक्षणं, न तु मायावादिनाम् । तत्कथमुच्यते अनधिगतार्थगन्तृप्रमाणमिति तन्मतमित्याशङ्क्य परिहरति ॥ एतद्भाट्टा-नामिति ॥ अत्र यद्यपीति तथापीति पदद्वयमध्याहार्यम् । ततश्च यद्यप्येतद्भाट्टानां लक्षणम् । तथापि व्यवहारे भट्टनय इति मायावादि-भिरङ्गीकारात्तन्मतमिति योज्यम् ॥ ज्ञानकर्मत्वानङ्गीकारादिति ॥ चिद्रूप-ज्ञानकर्मत्वाङ्गीकारे तद्रूपदृश्यत्ववति आत्मनि मिथ्यात्वाभावेन व्यभिचा-रप्रसङ्ग इति कर्तृकर्मविरोधप्रसङ्ग इत्यर्थः ॥ वृत्त्युपलक्षित इति ॥ तथा च वृत्तिनाशेऽपि न मोक्षनिवृत्तिः । काकापगमेऽपि गृहनाशादर्शनादिति

भावः ॥ तथाऽपीति ॥ वृत्त्युपलक्षितस्यात्मनो जीवन्मुक्तावपि सत्त्वात्तत्राप्यज्ञाननिवृत्तिप्रसङ्गः । न चेष्टापत्तिः । तथा सति देहावभासजगदवभासाभावप्रसङ्गेन भिक्षाटनादौ शिष्यबोधनार्थं व्याख्यानादौ च प्रवृत्तिर्न स्यादिति भावः।

**मायावादपरशुः**

॥ अपरं चाहेति ॥ चस्त्वर्थः । अपरं त्वाहेत्यर्थः ॥ अर्थस्य फलस्य चेति ॥ अनधिगतश्चासावर्थश्चेति विग्रहाश्रयणेऽर्थेऽतिव्याप्तिः। अनधिगतोऽर्थो यस्येति विग्रहकरणे फलेऽतिव्याप्तिरिति भावः । अस्त्विदं लक्षणं मायावाद्यभिमतं, ततश्च को दोष इत्यतो मूलाभिप्रायमाह ॥ यदीति ॥ प्रमाणलक्षणाभावादप्रमाणतया शास्त्रस्य त्वतदभिमतो महाजनपरिग्रहो न स्यादिति भावः ।

**टीका**

**अद्वैतवादे तन्न्यायेन विषयाभावसमर्थनम् ।**

**एवमयथार्थपरत्वमन्यथाप्रतिपादकत्वमित्यभिप्रेत्योपपादितम् । अधुना विषयप्रयोजनादिरहितत्वमन्यथाप्रतिपादकत्वमभिप्रेत्य तत् सिद्ध्यर्थं पराभिमतं शास्त्रस्य विषयादिकं परन्यायेनापाकरोति–**

मायावादखण्डनम्

अज्ञानासम्भवादेव तन्मतमखिलमपाकृतम् ।

**टीका**

**तन्मतं तदभिमतम् अखिलं विषयादिकमपाकृतं वेदितव्यम् । कथम्? उक्तप्रकारेणैव तन्मते अज्ञानासम्भवाद्विषयादेश्चाज्ञानसापेक्षत्वात् । अज्ञातो हि विषयो भवति । अन्यथा अतिप्रसङ्गादिति ।**

एवमज्ञानासम्भवेन विषयं निराकृत्य प्रकारान्तरेण निराचष्टे–

मायावादखण्डनम्

मिथ्यात्वे चैक्यस्यातत्त्वावेदकत्वमागमस्य स्यात् ।

टीका

ऐक्यं हि शास्त्रस्य विषयतया परस्याभिमतम् । तत्किमात्मस्वरूपातिरिक्तम्? उत तन्मात्रम्? आद्येऽपि सत्यं मिथ्या वा ? नाद्यः । अद्वैतहानिप्रसङ्गात् । न द्वितीयः । ऐक्यस्य मिथ्यात्वे तत्प्रतिपादकस्य शास्त्रस्यातत्त्वावेदकत्वं स्यात् । तथा चापसिद्धान्तः स्यात् ।

ब्रह्मात्मैक्यस्य मिथ्यात्वे भेदसत्यतासिद्धिदोषः ।

किं च–

मायावादखण्डनम्

सत्यता च भेदस्य ।

टीका

परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिना व्याप्तत्वादैक्यस्य मिथ्यात्वे भेदस्य सत्यता च स्यात् । अत ऐक्यमात्मस्वरूपमेवेत्यङ्गीकार्यम् । स्वरूपस्य च स्वप्रकाशत्वेन न विषयता सम्भवतीति ।

मन्दारमञ्जरी

॥ विषयप्रयोजनादिरहितत्वमन्यथाप्रतिपादकत्वमित्यभिप्रेत्येति ॥ लोके हि वैद्यशास्त्रादिकं सति विषयादौ कस्यचिदर्थस्य प्रतिपादकं दृष्टम् । इदं

त्वन्यथाऽपि विषयाद्यभावेऽपि प्रतिपादकमित्येवमन्यथाप्रतिपादकत्वादित्यनेन विषयाद्यभावोऽभिप्रेत इति द्रष्टव्यम् । यद्वा, विषयादिरहितेऽपि तस्मिन् प्रेक्षावतां प्रवृत्तिसिद्धये सामान्यतो विषयादिकमस्तीति प्रतिपादकत्वादित्येवमन्यथा प्रतिपादकत्वादित्यनेन विषयाद्यभावोऽभिप्रेत इति द्रष्टव्यम् ।

अन्ये तु, अन्यथा स्वप्रकाशत्वेन सिद्धप्रकारादन्येन प्रकारेण अप्रतिपादकत्वादित्येवमन्यथाप्रतिपादकत्वादित्यनेन विषयाद्यभावोऽभिप्रेत इति व्याचक्षते । विषयाद्यभावस्य च, ''विमतमनारम्भणीयं निर्विषयत्वात् स्फीतालोकमध्यस्थसमनस्केन्द्रियसंयुक्तघटप्रतिपादकवाक्यवत्, निष्प्रयोजनत्वात्, काकदन्तपरीक्षाग्रन्थवच्च'' इति प्रत्येकं हेतुत्वं द्रष्टव्यम् ।

नन्वैक्यस्य मिथ्यात्वं सिद्धं चेत्तेनागमस्यातत्त्वावेदकत्वमाचार्येणापादितं स्यात् । तदेव कथमित्याशङ्क्याऽऽचार्येण, ऐक्यमात्मस्वरूपातिरिक्तम्? उताऽऽत्ममात्रम् ? आद्ये सत्यं मिथ्या वेति विकल्प्य तन्मात्रपक्षं परिशेषयितुं सत्यत्वपक्षे अद्वैतहानिरित्यभिप्रेत्य मिथ्यात्वपक्षे अतत्त्वावेदकत्वापादनं कृतम् । तेन नापादकासिद्धिरित्याह ।। ऐक्यं हि शास्त्रस्येत्यादिना ।। न द्वितीय इत्यस्यानन्तरं यत इत्यध्याहर्तव्यम् । ततश्च यतोऽपसिद्धान्तः स्यात्तस्मान्न द्वितीय इति योजना ।

ननु परैर्भेदमात्रस्य मिथ्यात्वाङ्गीकारायत्रैक्यस्य मिथ्यात्वं तत्र भेदस्य सत्यत्वमित्यत्र परं प्रति दृष्टान्ताभावात् कथमैक्यस्य मिथ्यात्वेन भेदस्य सत्यत्वापादनमित्याशङ्क्याऽऽह ।। परस्परविरुद्धयोरिति ।। यत्र परस्परविरुद्धयोरन्यतरस्य मिथ्यात्वं तत्रान्यतरस्य सत्यत्वम् । यथा ब्रह्मणि दुःखात्मताया मिथ्यात्वेनाऽऽनन्दरूपतायाः सत्यत्वमिति सामान्यव्याप्तिरस्तीति । आनन्दात्मकतायाश्चासत्यत्वे मोक्षस्यापुरुषार्थत्वम्, 'आनन्दो ब्रह्म' इत्यादिश्रुतेरतत्त्ववेदकत्वं च स्यादिति भावः । ननु तर्हि

तन्मात्रमिति द्वितीयपक्षोऽस्त्वित्याशङ्क्य तद्ब्रैक्यस्य स्वप्रकाशात्माभिन्नत्वेन नित्यसिद्धतया अज्ञातत्वाभावेन विषयत्वायोगादाचार्याभिप्रेतो विषयाभावः सिद्ध इत्याह ॥ स्वरूपस्य च स्वप्रकाशत्वेनेति ॥

**मायावादपरशुः**

इतः परं टीकायां श्रूयमाणम् 'एवमयथार्थपरत्वमन्यथाप्रतिपादकत्वमित्यभिप्रेत्योपपादितम् । अधुना विषयप्रयोजनादिरहितत्वमेवान्यथाप्रतिपादकत्वमित्यभिप्रेत्य तत्सिद्ध्यर्थं पराभिमतं शास्त्रस्य विषयादिकं परन्यायेनापाकरोति' इति वाक्यं प्रक्षिप्तं, न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । विषयादिराहित्यस्यान्यथाप्रतिपादकत्वशब्दार्थत्वाभावेऽपि दूषणांतरत्वेनोद्भावनसंभवात् । अन्यथाप्रतिपादकत्वपदादप्रतीयमानस्य विषयादिराहित्यस्य तदर्थत्वमभिप्रेतमिति कथनायोगात् ॥ उक्तप्रकारेणेति ॥ आवरणं ह्याव्रियमाणेन व्याप्तमित्याद्युक्तप्रकारेणेत्यर्थः । 'ननु अज्ञानासंभवातन्मखिलमपाकृतम्' इत्ययुक्तम् । अन्योन्याश्रयात् । आव्रियमाणं हि विषय एव नान्यत् । ततश्च विषयाभावादज्ञानाभावः । ततश्च विषयाद्यभाव इति चेन्न । अज्ञानविषयाभावेनाज्ञानाभावं प्रसाध्य तेन शास्त्रविषयाद्यभावसमर्थनात् । न ह्यैक्यस्याज्ञानविषयत्वासंभवाच्छास्त्रविषयत्वं न संभवतीत्युक्तावन्योन्याश्रयप्रसक्तिरस्ति, येन तदुद्भावनमनुचितं स्यात् ॥ एवमज्ञानासंभवेनेति ॥ अत्र प्रकारांतरेणेति प्रक्षिप्तम् । दार्ढ्याय पुनरित्युच्छिन्नम् । ततश्चैवं टीकावाक्यपाठः— 'एवमज्ञानासंभवेनविषयादीन् निराकृत्य दार्ढ्याय पुनर्विषयादीन् निराकरोति' इति । अवश्यं चैतदेवं विज्ञेयम् । इहाप्यज्ञानासंभवमाश्रित्यैव विषयादिनिराकरणेन प्रकारांतरत्वाभावात् । यद्यपि मूले विषयादिनिराकरणं न भवति, तथाप्यैक्यमिथ्यात्वनिराकरणस्येदानीमसंगतत्वात् परिशेषेणैक्यस्य स्वरूपत्वं प्रसाध्य विषयत्वासम्भवे तात्पर्यमभ्युपेतमिति भावेन विषयादिकं निराकरोतीत्युक्तमिति बोध्यम् ॥ ऐक्यस्येति ॥ ऐक्यप्रतिपादकं

शास्त्रमतत्त्वावेदकं स्यादिति भावः ॥ तथा चेति ॥ पूर्वाचार्येणैक्य-प्रतिपादकं शास्त्रं तत्त्वावेदकं प्रमाणमैक्याप्रतिपादकमतत्त्वावेदकं प्रमाण-मित्यंगीकारादिति भावः । ऐक्यस्य मिथ्यात्वे ज्ञाननिवर्त्यत्वदसत्त्वापत्या भेदस्य सत्यता स्यादित्याह ॥ (मूले) सत्यता च भेदस्येति ॥ एतेनैक्यस्य मिथ्यात्वे भेदस्य सत्यतेत्यनुपपन्नम् । ऐक्यस्यानिर्वचनी-यत्वांगीकारेणासत्त्वानंगीकारादिति परास्तम् । अभेदेऽपि व्याप्यव्यापक-भावांगीकारेणाऽह ॥ परस्परविरुद्धयोरिति ॥ एतेनाभेदाभाव एव भेद-सत्यत्वस्यापादनीयत्वात् मिथ्याऽभेदे भेदसत्त्वापादनमयुक्तम् । मिथ्या-शब्दस्यानिर्वचनीयार्थकत्वेनासत्त्वार्थकत्वाभावादिति परास्तम् । मिथ्यात्वं वदतापि प्रतिपन्नोपाधौ तन्निषेधस्यांगीकृतत्वात् । विरुद्धयोरेकनिषेध-स्यापरसत्त्वव्याप्तत्वात् ।

## टीका

**पूर्वोत्तरग्रन्थयोः पौनरुक्त्यशङ्का तत्परिहारश्च ।**

पूर्वमनतिरेकपक्षप्रतिषेधेनातिरेकपक्षमङ्गीकार्यायथार्थप्रतिपादकत्वं सम-र्थितम् । इदानीं तु तद्विपर्ययेण विषयत्वाभावप्रतिपादनमिति भेदः ।

## मन्दारमञ्जरी

ननु पूर्वमैक्यं स्वरूपातिरिक्तं तदभिन्नं वा ? आद्ये मिथ्या सत्यं वा ? अभिन्नमित्यत्रापि तन्मात्रं तद्विशेषो वेति विकल्पं हृदि निधायाऽऽचार्येण मिथ्येति पक्षे 'न हि ब्रह्मात्मैक्यस्य' इत्यनेन शास्त्रस्यायथार्थप्रतिपादकत्वं स्यादित्युक्त्वा, अतिरिक्तं सत्यमिति पक्षे 'अद्वैतहानेः स्वरूपातिरिके, इत्यनेनाद्वैतहानिः स्यादित्युक्त्वा, तन्मात्रमिति पक्षे 'अनतिरेके स्वप्रकाश-त्वात्' इत्यनेन शास्त्रस्य सिद्धसाधनत्वं स्यादित्युक्त्वा, तद्विशेष इति पक्षे 'निर्विशेषत्वादात्मन' इत्यपसिद्धान्तमुक्त्वा ऐक्यं दूषितम् । इदानीमपि तमेव विकल्पं हृदि निधाय अतिरिक्तं सत्यमिति पक्षे पूर्वोक्ताद्वैतहानिं बहिरेवाभिप्रेत्य, तन्मात्रमिति पक्षेऽपि पूर्वोक्तां सिद्धसाधनतां बहिरेवाभि-

प्रेत्य, तद्विशेष इति पक्षे तमेवापसिद्धान्तं बहिरेवाभिप्रेत्य, अतिरिक्तं मिथ्येति पक्षे मिथ्यात्वे चैक्यस्येत्यनेन आगमस्यातत्त्वावेदकत्वप्रसङ्ग-मुक्त्वैक्यं दूषितम् । तत्र अतत्त्वावेदकत्वं नाम अयथार्थप्रतिपादकत्वमेव । ततश्च दूषणप्रकारभेदाभावेन पुनरुक्तिरित्याशङ्क्याऽऽह ॥ पूर्वमनतिरेकेति ॥ पूर्वमन्यथाप्रतिपादकत्वमयथार्थप्रतिपादकत्वमिति विवक्षितत्वात् तत्सिद्ध्य-र्थमनतिरेकपक्षं, अतिरेकेऽपि सत्यत्वपक्षं दूषयित्वा, अतिरिक्तं मिथ्येति पक्षं च परिशेष्यायथार्थप्रतिपादकत्वस्यासिद्धिः परिहृता । इदानीं विषयादि-राहित्यमन्यथा प्रतिपादकत्वमित्यभिप्रेत्य तत्सिद्ध्यर्थमतिरिक्तमिति पक्षं, अनतिरिक्तत्वेऽपि तद्विशेषत्वपक्षं च दूषयित्वा, तन्मात्रत्वपक्षं च परिशेष्य विषयादिशून्यत्वस्यासिद्धिः परिहृता । तेन पर्यवसानभेदेन फलभेदाद-पुनरुक्तिरित्यर्थः ।

**श्रीनिवासतीर्थीयटिप्पणी**

पूर्वमिति ॥ अनतिरेक इति मूल इत्यर्थः ॥ तद्विपर्ययेणेति ॥ अतिरेकपक्षप्रतिषेधेनानतिरेकपक्षमंगीकार्येत्यर्थः ॥

**मायावादपरशुः**

॥ अतिरेकपक्षमंगीकार्येति ॥ यद्यपि प्रमाणविरोधेनैक्यस्यासत्त्वात् सत्त्वेन तत्प्रतिपादकस्यान्यथाप्रतिपादकत्वमिति प्रतिपादनावसरे नातिरेक-पक्षांगीकारप्रयोजनमस्ति । तथापि नैक्यस्य प्रमाणविरुद्धत्वं युक्तम् । तस्य ब्रह्मस्वरूपत्वात् । अन्यथा ब्रह्मणोऽप्यसत्त्वं स्यादित्याशंकानिवृत्त्यर्थ-मतिरेकपक्षमंगीकार्येत्युक्तम् ।

**टीका**

अद्वैतवादे प्रयोजननिरासः ।

एवं विषयं निराकृत्य प्रयोजनं निराकरोति–

मायावादखण्डनम्

**एवमेव प्रयोजनमपि निरस्तम् ।**

टीका

**यथा अज्ञानासम्भवादज्ञातस्य विषयस्यासम्भवोऽद्वैतवादे एवमेवाज्ञानासम्भवादेव शास्त्रस्य प्रयोजनमपि निरस्तं वेदितव्यम्। मोक्षो हि प्रयोजनम् । स चाज्ञाननिवृत्तिरूपः । यदाह–**

**'अविद्यास्तमयो मोक्षः सा संसार उदाहृतः' ॥ इति ।**

**न चाज्ञानासम्भवे तन्निवृत्तिरुपपद्यते । नन्वेतत् 'अज्ञानासम्भवादेव' इत्यनेनैव वाक्येन सिद्धम् । तत्किमर्थोऽयं ग्रन्थः? सत्यं, तथापि तस्यैव प्रपञ्चोऽयमित्यदोषः । प्रपञ्चनं च प्रकारान्तरेण प्रयोजननिरासप्रस्तावायेति ।**

**आत्मैवाज्ञानहानिरिति पक्षनिरासः ।**
**प्रकारान्तरेण प्रयोजनं निराकरोति–**
**स्वरूपत्वान्मोक्षस्य पूर्वमेव सिद्धत्वात्**

**प्रयोजनं निरस्तमिति सम्बन्धः । अज्ञाननिवृत्तिलक्षणो हि मोक्षः परेणाऽत्मस्वरूपतयैवेष्टः । यथाह 'आत्मैवाज्ञानहानिः' इति । आत्मस्वरूपं च प्रागेव शास्त्रप्रवृत्तेः सिद्धमेवेति कथं तत् प्रयोजनं स्यात् ? न हि कश्चित्सिद्धस्य साधनाय यतते । नापि तत् साधनार्हम् ।**

मन्दारमञ्जरी

॥ न चाज्ञानासम्भवे तन्निवृत्तिरिति ॥ प्रध्वंसरूपाया निवृत्तेः प्रतियोग्यभावे अयोगादिति भावः ॥ नन्वेतदज्ञानासम्भवादेवेत्यनेनैवेति ॥ तत्राभिमतवाचिना मतशब्देन प्रयोजनस्यापि विवक्षितत्वादित्यर्थः । 'न

हि कश्चित्' इत्यनेनासिद्धसिद्धेरेव प्रयोजनत्वान्न सिद्धसिद्ध्यर्थं प्रेक्षावत्प्रयत्नोयुक्त इति मुमुक्षूणां मोक्षसिद्ध्यर्थं श्रवणादौ प्रवृत्तिरयुक्ता स्यादित्युक्तम् । 'नापि तत्साधनार्हं' इत्यनेन तु प्रयोजनमननुसन्धाय मुमुक्षूणां प्रवृत्तावपि प्रागभावप्रतियोगिन एवोत्पादनापरपर्यायसाधनार्हत्वान्न सिद्धस्य ब्रह्मणः साधनार्हत्वमस्तीत्युक्तमिति भेदः ।

### श्रीनिवासतीर्थीयटिप्पणी

॥ आत्मैवाज्ञानहानिरिति ॥ अधिकरणातिरिक्ताभावाभावात् । व्यवहारे भट्टनय इत्यंगीकृतत्वादिति भावः । पूर्वमेवेत्यत्र शास्त्रप्रवृत्तेरिति शेषमभिप्रेत्याऽह ॥ प्रागेवेत्यादि ॥

### टीका

ज्ञात आत्मैवाज्ञानहानिरिति पक्षनिरासः ।

**'ज्ञात आत्मैवाज्ञानहानिर्नात्ममात्रम्' इति कश्चित् । तदसत् । आत्मनो ज्ञानकर्मतानङ्गीकारात् । वृत्तिविषयताऽस्तीति चेत् । तथापि वृत्तिविशिष्ट आत्मा मोक्ष इत्युक्तं स्यात् । तथा च वृत्तेर्निवृत्तौ मोक्षनिवृत्तिप्रसङ्गः । वृत्त्युपलक्षित आत्मा मोक्ष इति चेत्, तथापि जीवन्मुक्तौ प्रसङ्ग इत्येषा दिक् ।**

### मन्दारमञ्जरी

ननु नात्ममात्रमज्ञाननिवृत्तिः, किं तु ज्ञातः । एवं च ज्ञातत्वस्य शास्त्रप्रवृत्तेः प्रागसिद्धत्वात् तदुपरक्तात्मनः शास्त्रप्रवृत्तेः प्रागसिद्धिरिति न पूर्वोक्तदोष इति शङ्कते ॥ ज्ञात आत्मैवाज्ञानहानिरिति ॥ ज्ञातत्वं नाम चिद्रूपज्ञानविषयत्वं वा ? वृत्तिरूपज्ञानविषयत्वं वा ? इति विकल्प्य आद्यं दूषयति ॥ आत्मनो ज्ञानेति ॥ द्वितीयं शङ्कते ॥ वृत्तीति ॥ अस्तु वृत्तिविषयत्वरूपं ज्ञातत्वम् । तथापि 'ज्ञातो घटः' इत्यत्रेव 'ज्ञात आत्मा' इत्यत्रापि विषयत्वेनाऽत्मसम्बद्धं ज्ञानमज्ञातात् पदार्थादात्मानं

व्यावर्तयतीति व्यावर्तकत्वमङ्गीकार्यम् । तत्र वृत्तिरूपं व्यावर्तकं विशेषणम् ? उपलक्षणं वा ? आद्ये वृत्तिविशिष्ट आत्माऽज्ञाननिवृत्तिरूपो मोक्ष इत्युक्तं स्यादित्याह ॥ तथापीति ॥ दूषयति ॥ तथा चेति ॥ विशेषणनिवृत्तौ विशिष्टनिवृत्तिनियमाद्विशेषणीभूतवृत्तिनिवृत्तौ विशिष्टात्मरूपो योऽज्ञानहान्याख्यो मोक्षस्तस्यापि निवृत्तिः स्यादित्यर्थः । ननु वृत्तिरुपलक्षणमिति द्वितीयः पक्षोऽस्तु । तत्र वृत्त्युपलक्षित आत्मा मोक्षः। न चोपलक्षणनिवृत्तावुपलक्षितनिवृत्तिः । पाकक्रियानिवृत्तावपि पाचकानुवृत्तिदर्शनात् । यथाह–

**निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।**
**उपलक्षणहानेऽपि स्यान्मुक्तिः पाचकादिवत् ॥** इति ।

तथा च न कोपि दोष इति भावेन शङ्कते ॥ वृत्त्युपलक्षित इति ॥ दूषयति ॥ तथापीति ॥ वृत्त्युपलक्षित आत्माऽज्ञानहानिश्चेत् जीवन्मुक्त्यवस्थायामप्यज्ञाननिवृत्तिप्रसङ्गः। तत्त्वविषयकापरोक्षवृत्तेः सत्त्वात् । यथोक्तं– 'उत्पन्नात्मावबोधस्य जीवन्मुक्तिः प्रसिद्ध्यति' इति । न चेष्टापत्तिः। जीवन्मुक्तस्याज्ञानानुवृत्त्यभावे स्वदेहादिजगदवभासाभावेन तस्य भिक्षाटनादौ प्रवृत्त्यनुपपत्तिरिति भावः ।

**द्वितीय पक्षे जीवन्मुक्तस्य निःशेषाज्ञाननिवृत्त्यापादनम् ।**

ननु जीवन्मुक्तस्य शरीरादिप्रतिभासदर्शनेन निश्शेषाविद्यानिवृत्त्यभावेऽपि प्रपञ्चे परमार्थसत्यत्वादिभ्रमहेतुरविद्याकारो निवर्तत एवेतीष्टापत्तिरिति शङ्कापरिहारो दिक्पदसूचितः । परिहारप्रकारस्तुनिःशेषाविद्यानिवृत्तिर्जीवन्मुक्त्यवस्थायामापाद्यते । तस्यापि वृत्त्युपलक्षितात्मस्वरूपत्वात् । तस्य जीवन्मुक्त्यवस्थायामपि भावात् । न च वाच्यं प्रारब्धकर्मविनाशविशिष्टो वृत्त्युपलक्षित आत्माऽज्ञाननाशः । न च जीवन्मुक्त्यवस्थायां प्रारब्धकर्मविनाशविशिष्ट आत्माऽस्ति । तदा प्रारब्धकर्मणां सत्त्वादिति । तथात्वे वृत्त्युपलक्षितग्रहणवैयर्थ्यापातात् । प्रारब्धकर्म-

विनाशविशिष्टस्यात्मनः प्रागसत्त्वेन साध्यत्वोपपत्त्या साध्यत्वानुपपत्तिदोषपरिहारस्य कर्मविनाशविशिष्टग्रहणेनैव कृतत्वेन वृत्त्युपलक्षितपदस्याकिञ्चित्करत्वात् । किं च प्रारब्धकर्मविनाशस्य मिथ्यात्वे तन्निवृत्त्यवश्यम्भावेन पुनः प्रारब्धकर्मोन्मज्जनप्रसङ्गः । सत्यत्वे अद्वैतहानिः। ब्रह्मस्वरूपत्वे जीवन्मुक्त्यवस्थायामपि तत्प्रसङ्ग इति । न च वृत्त्युपलक्षित इत्यनेन अवर्तमानया वृत्त्योपलक्षितत्वं विवक्ष्यते । एवं च जीवन्मुक्त्यवस्थायां न प्रसङ्गः । तदा वृत्तेर्वर्तमानत्वादिति वाच्यम् । जीवन्मुक्तस्य सुषुप्त्यवस्थायां वृत्त्यभावेन निःशेषाविद्यानिवृत्तिप्रसङ्गादिति । प्रपञ्चस्तु सत्तर्कविलासे अस्माभिः कृतो द्रष्टव्यः ।

## श्रीनिवासतीर्थीयटिप्पणी

॥ ज्ञात आत्मैवेति ॥ तथा चाऽत्मनो ज्ञा(तत्वार्थ)नार्थं शास्त्रप्रवृत्तिरिति भावः ॥ ज्ञानकर्मतेति ॥ चैतन्यविषयत्वेत्यर्थः । वृत्तिप्रतिबिंबितचैतन्याभिव्यक्ताधिष्ठानचैतन्यरूपज्ञानविषयत्वस्य कर्तृकर्मविरोधेनाऽत्मनोऽनंगीकारादिति भावः ॥ वृत्तिविषयतेति ॥ वेदांतजन्यवृत्तिरूपज्ञानविषयतेत्यर्थः ॥ प्रसंग इति ॥ विशेषणनिवृत्तौ विशिष्टनिवृत्तिनियमादिति भावः ॥ वृत्त्युपलक्षित इति ॥ न चोपलक्षणनिवृत्तौ उपलक्षितनिवृत्तिरिति नियमोऽस्ति । काकनिवृत्तावपि गृहानिवृत्तिदर्शनादिति भावः ॥ जीवन्मुक्ताविति ॥ तत्त्वविषयकापरोक्षवृत्त्युपलक्षितस्याऽत्मनो जीवन्मुक्त्यवस्थायामपि सत्वेन तदानीमप्यज्ञाननिवृत्तिप्रसंगः। न चेष्टापत्तिः । भिक्षाटनादौ प्रवृत्त्यभावप्रसंगात् । न चाविद्यालेशात् प्रवृत्तिः । तस्या निरंशत्वात् । सांशत्वेऽपि वा सोंऽशोऽज्ञानकार्यं न वा ? न चेत् सत्यत्वापत्त्या मिथ्यात्वासिद्धिः । आद्ये अज्ञाननिवृत्तौ तस्यावस्थानानुपपत्तिः । उपादाननिवृत्तौ उपादेयस्यावस्थानादर्शनात् । न चाविद्यासंस्कारात् प्रवृत्तिरिति वाच्यम् । तस्याप्युक्तरीत्याऽयोगादित्यादिकं दिक्शब्दार्थः ।

**श्रीगुरुराजीयटिप्पणी**

ननु जीवन्मुक्तिदशायामज्ञाननिवृत्तावपि तत्संस्कारेणैव प्रारब्धकर्मवशाद्वा, निवृत्ताया अप्यविद्याया दग्धपटन्यायेन किञ्चित्कालमवस्थानाद्वा, अविद्यालेशावस्थानाद्वा एकस्या एव संसारमूलकारणभूताविद्याया आकारवाहन्यसत्त्वात् जीवन्मुक्तस्य द्वैतसत्यत्वाद्यवस्थानेन समस्तद्वैतसत्यत्वकल्पकस्याकारस्य तत्त्वसाक्षात्कारेणार्थक्रियासामर्थ्यप्रपञ्चकल्पकस्याकारस्य निवृत्तावपि अपरोक्षप्रवृत्तिभासविषयाकारकल्पकस्य तदाकारस्य जीवन्मुक्तिदशायामनिवृत्त्या समाध्यवस्थया तिरोहितस्यान्यदेहावभासजगदवभासहेतुतयाऽनुवृत्तेर्वा द्वैतदर्शनोपपत्तेः युक्ता भिक्षाटनादौ प्रवृत्तिरित्यत आह ॥ दिगिति ॥ एतेषां पक्षाणां निरासस्तु "न चाप्येकत्वविज्ञानादुक्तन्यायेन मुच्यत" इत्येतद्व्याख्यानावसरे सुधायामेव स्पष्टम् ॥

**मायावादपरशुः**

॥ जीवन्मुक्तौ प्रसंग इति ॥ जीवन्मुक्तावज्ञाननिवृत्तिरूपमोक्षप्रसंग इत्यर्थः ।

**टीका**

अज्ञानहानेः पञ्चमप्रकारतापक्षनिरासः ।

अपर आह– नाविद्यास्तमयलक्षणं मोक्षमात्मस्वरूपमाचक्ष्महे । किं नाम? अन्यमेव । न च वाच्यं तस्य सत्त्वे अद्वैतहानिः, असत्त्वे तदभावः, सदसत्त्वं विरुद्धं, सदसद्विलक्षणत्वेऽज्ञाननिवृत्तित्वानुपपत्तिः, प्रतियोगितन्निवृत्त्योर्वैलक्षण्यस्यावश्यकत्वादिति । पञ्चमप्रकारताभ्युपगमात् । यथोक्तं–

न सन्नासन्न सदसन्नानिर्वाच्यश्च तत्क्षयः ।
यक्षानुरूपो बलिरित्याचार्याः प्रत्यपीपदन् ॥ इति ।

तत्राऽह–

मायावादखण्डनम्

**अज्ञानासम्भवेन चतुर्थप्रकाराभावात् पञ्चमप्रकारताऽपि निरस्ता ।**

टीका

**मोक्षस्येत्यनुवर्तते । अज्ञानस्य हि न सत्त्वमद्वैतभङ्गात् । नाप्यसत्त्वं प्रतीतिविरोधात् । न च सदसत्त्वं विरोधात् । अतश्चतुर्थप्रकारोऽनिर्वचनीयत्वमङ्गीकार्यम् । न च तन्निवृत्तिरपि तादृशी सम्भवतीत्येवं मोक्षस्य पञ्चमप्रकारता परेणाङ्गीकृता । स्यादियं यद्यज्ञानमेव परमते स्यात् । न च तत्सम्भवति । 'सिद्धत्वात्स्वरूपस्य' इत्यादिना तदसम्भवस्योक्तत्वात् । अतोऽज्ञानासम्भवेन चतुर्थप्रकारस्य सुतरामभावात् तेन कल्प्यमाना मोक्षस्य पञ्चमप्रकारताऽपि पूर्वोक्तरीत्यैव निरस्ता ।**

मन्दारमञ्जरी

एवं तावदात्मैवाज्ञानहानिरिति इष्टसिद्धिकारादिमतानुसारितत्त्वप्रदीपिकाकारादिमतं दूषयित्वा 'सा आत्मातिरिक्तः पञ्चमप्रकारो मोक्षः' इति आनन्दबोधादिमतदूषणपरत्वेन 'अज्ञानासम्भवादेव चतुर्थप्रकाराभावात्' इति मूलग्रन्थं व्याख्यातुं तन्मतमाशङ्कते ।। अपर आहेति ।। असत्त्वे तदभाव इति ।। अज्ञाननिवृत्तिरूपस्य मोक्षस्य शशशृङ्गवदत्यन्तासत्त्वे मोक्षस्य स्वरूपेणैवाभावादनिर्मोक्षप्रसङ्ग इत्यर्थः ।। यक्षानुरूपो बलिरिति ।। लोके हि, भावस्याभावो निवृत्तिः, अभावस्य च भावो निवृत्तिः । भावाभावविलक्षणस्य त्वज्ञानस्य निवृत्तिर्यादृशो यक्षस्तादृशो बलिरिति पञ्चमप्रकारेत्यर्थः ।। प्रतीतिविरोधादिति ।। अपरोक्षप्रतीतिविरोधादित्यर्थः ।

**श्रीनिवासतीर्थीयटिप्पणी**

एवमिष्टसिद्धिकारमतानुसारितत्त्वप्रदीपिकाकारादिमतंदूषयित्वा आनंद-बोधादिमतदूषणपरत्वेनोत्तरमूलं व्याख्यातुमाशङ्कते ॥ अपर आहेति ॥ अन्यमेवेति ॥ आत्मस्वरूपाद्भिन्नमेवेत्यर्थः । तस्य अविद्यास्तमयलक्षण-मोक्षस्य ॥ असत्त्व इति ॥ अज्ञाननिवृत्तिरूपमोक्षस्य शशशृंगवदत्यंतासत्त्वे मोक्षस्य स्वरूपत एवाभावः प्राप्त इत्यर्थः । अज्ञाननिवृत्तित्वानुपपत्तिरिति ॥ अज्ञाननिवृत्तेः सदसद्वैलक्षण्यांगीकारे अज्ञानस्यापि सदसद्विलक्षणत्वांगी-कारेणाज्ञानतन्निवृत्त्योः त्वन्मते (सालक्षण्या) सदसद्वैलक्षण्यानुपपत्ति-रित्यर्थः । कुत इत्यत आह ॥ प्रतियोगितन्निवृत्त्योरिति ॥ अत्र निवृत्तिशब्देन अत्यंताभाव एव विवक्षितः । न ध्वंसः । तथा हि । यदि निवृत्तिशब्देन ध्वंसो विवक्षितः स्यात्तर्हि प्रतियोगितद्ध्वंसयोः भिन्नसत्ताकत्वरूपं वैलक्षण्य-मावश्यकमित्युक्तं स्यात् । तथा च तयोरेककालानवस्थानरूपो विरोध एव लोके न स्यात् । न हि प्रातिभासिकरूप्यस्य प्रध्वंसो व्यावहारिक इत्युक्ते कश्चन विरोधोऽस्ति । किं तु तयोः समानसत्ताकत्व एव । न हि रूप्यतद्ध्वंसावुभावपि व्यावहारिकावेवैकदा संभवतः । अत्यंताभाव-विवक्षायां तु प्रतियोगितदत्यंताभावयोर्भिन्नसत्ताकत्वरूपवैलक्षण्यमप्या-वश्यकमेव । एवं सति तयोरविरोधः तन्मते संभवति । मायिना हि स्वात्यंताभावसामानाधिकरण्यं मिथ्यात्वमित्यंगीकृत्य मृत्पिंडे घटतदत्यंता-भावयोरुभयोरपि सत्त्वमङ्गीकृत्य घटस्य मिथ्यात्वमुच्यते । तथा च प्रतियोगितदत्यंताभावयोर्विरोधः कुत्रापि तन्मते नास्त्येव । यद्यस्ति तर्हि निरुक्तं मिथ्यात्वं न सिध्यति । घटो व्यावहारिकस्तदत्यंताभावः पारमार्थिक इति तयोर्भिन्नसत्ताकत्वात् । यदि च प्रतियोगितदत्यंताभावयोः समानसत्ताकत्वं तर्ह्येव विरोधः । न हि व्यावहारिकयोर्घट-तदत्यंताभावयोरेकदैव स्थितिः संभवति । तथा च प्रकृतेऽप्यज्ञानस्य मिथ्यात्वसिद्धये स्वात्यंताभावसामानाधिकरण्यम् एकस्मिन्काल एव

वाच्यम् । अन्यथा तन्न सिद्ध्येत् । तथा हि– यद्यज्ञानतदत्यंताभावयोः समानसत्ताकत्वं स्यात्तदा विरोधेन एककाले सत्ताऽयोगेनाज्ञानस्य निरुक्त-मिथ्यात्वासिद्धिः । अतस्तत्सिद्ध्येऽज्ञानतन्निवृत्त्योरविरोधोऽवश्यं वाच्यः । स च भिन्नसत्ताकत्वरूपवैलक्षण्योक्तावेव संभवतीति । एवं प्रतियोगित-दत्यंताभावयोर्भिन्नसत्ताकत्वरूपवैलक्षण्यस्याऽवश्यकत्वेन त्वन्मतेऽज्ञानस्य सदसद्विलक्षणत्वेन तन्निवृत्तेरपि सदसद्विलक्षणत्वमनुपपन्नमेवेति भावः ।

कुतो न वाच्यमित्यत आह । पंचमप्रकारतेति । सदसद्विलक्षण-विलक्षणत्वाभ्युपगमादित्यर्थः । तत्क्षयः अविद्याक्षयः । न सन्नित्यादिना सम्बन्धः ॥ यक्षानुरूपो बलिरिति ॥ लोके भावपदार्थस्य निवृत्तिरभावः अभावस्य च निवृत्तिर्भावः । प्रतियोग्यापत्तेरेव अभावनिवर्तकत्वस्य प्रागभावे दृष्टत्वात् । भावाभावविलक्षणस्याज्ञानस्य निवृत्तिर्यादृशो यक्षः तादृशो बलिरिति न्यायेन पंचमप्रकार इत्यर्थः । यक्षस्याल्पत्वे तद्बलेरपि अल्पत्वं, तस्य महत्त्वे तद्बलेरपि महत्त्वं दृष्टम् । तद्वत् महायक्षस्थानीया-ज्ञाननिवृत्तेः पंचमप्रकारत्वरूपो महाबलिर्दीयत इति भावः । प्रत्यपीपदन् प्रतिपादितवंतः ॥ प्रतीतिविरोधादिति ॥ अहमज्ञ इति प्रतीतिविरो-धादित्यर्थः । यदसत्तन्न प्रतीयत इत्यंगीकारादिति भावः । इयं परांगीकृता पंचमप्रकारता ॥ सुतरामिति ॥ प्रकारिण एवाभावादिति भावः ॥ तेन कल्प्यमानेति ॥ चतुर्थप्रकारासंभवेन कल्प्यमानेत्यर्थः ॥ पूर्वोक्तरीत्यैवेति ॥ सद्भ्यामधिकरणप्रतियोगिभ्याम् अभावो निरूप्यत इत्युक्तत्वेनाज्ञाने सति तन्निवृत्तिरूपमोक्षस्य पंचमप्रकारता वक्तव्या । उक्तरीत्याऽज्ञान-स्यैवासंभवेन तन्निवृत्तिरूपमोक्षस्य सुतरामसंभवेन पंचमप्रकारता कस्य स्यादिति भावः ।

**श्रीगुरुराजीयटिप्पणी**

प्रतियोगितन्निवृत्त्योरिति ॥ लोके भावनिवृत्तेरभावत्वस्याभाव-निवृत्तेर्भावत्वस्य च दर्शनेन प्रतियोगितन्निवृत्तिभावे तदभिमतयोरतुल्य-रूपत्वस्य प्रयोजकत्वस्य स्थित्या सदसद्विलक्षणतयाऽङ्गीतस्याज्ञानस्य या

निवृत्तिस्तस्या अपि सदसद्विलक्षणत्वेन तुल्यरूपत्वप्रसक्त्या प्रतियोगितन्निवृत्तिप्रयोजकस्यातुल्यरूपत्वस्याभावेन तत्प्रयोज्यस्य प्रतियोगितन्निवृत्तिभावस्याप्यनुपपत्तिप्रसङ्गान्नाविद्यानिवृत्तेः सदसद्विलक्षणत्वं भवतीति भावः । यद्यपि प्रतियोगितन्निवृत्तिभावे मात्रयापि सालक्षण्याभावरूपप्रतियोगिनिष्ठसर्वधर्मराहित्यं न प्रयोजकम् । तथा सति घटतद्ध्वंसयोरपि ज्ञेयत्वाभिधेयत्वादिना सालक्षण्यसद्भावेन प्रतियोगिनिष्ठसर्वधर्मराहित्यरूपातुल्यत्वरूपप्रयोजकविरहप्रसङ्गेन प्रतियोतन्निवृत्तिभावाभावप्रसङ्गात् । किन्तु केनचित् प्रकारेण वैलक्षण्यमात्रम् । तच्चाविद्यातन्निवृत्त्योरप्यस्त्येव । अविद्यातन्निवृत्तित्वाभ्यां वा, निवृत्तिमत्त्वतद्राहित्याभ्यां वा वैलक्षण्यस्यानुभूयमानत्वात् । ततश्चाविद्यातन्निवृत्त्योः सदसद्विलक्षणत्वाविशेषेऽपि उक्तरूपस्य प्रतियोगितन्निवृत्तिभावप्रयोजकरूपस्यावैकल्यान्न तद्भावानुपपत्तिः । तथाऽपि प्रतियोगिनिष्ठसर्वधर्मराहित्यमेव प्रतियोगितन्निवृत्तिभावे प्रयोजकम् इत्यभिमानेनेदमुदितम् । अयं च व्युत्पादनप्रकारः 'अनिर्वचनीयाविद्यानिवृत्तिः कथमनिर्वचनीयेति चेत् घटप्रध्वंसयोर्यथा तथेति जानीयात्' इति स्वप्नाधिकरणसुधायां, तथा कथमनिर्वाच्यस्यानिर्वाच्यव्यावृत्तिरिति उपक्रम्यान्तरेण वैलक्षण्यं कथं तन्निवृत्तितद्भावे इत्याशङ्क्य, 'तत्किमिदानीं मात्रयापि सालक्षण्येन न भाव्यम् । मा भूत् घटतद्ध्वंसयोरपि तद्भावः । ज्ञेयत्वाभिधेयत्वादिना सालक्षण्योपलम्भात्' इत्यादिमोक्षवादीयन्यायमकरन्दे तट्टीकायां च स्पष्टः।

**मायावादपरशुः**

असत्त्वइति ।। अज्ञाननिवृत्तेरसत्त्वे तदभावोऽज्ञानं मोक्षसमये स्यात् । विद्यमानस्य निवृत्त्याऽभावे तत्स्वरूपानुवृत्तेरावश्यकत्वादिति भावः । एतेनासत्त्वे तदभाव इत्ययुक्तं, साध्यावैशिष्ट्यादिति परास्तम् ।। सदसद्विलक्षणत्व इति ।। सदसद्विलक्षणमात्रस्याज्ञानतत्कार्ययोरन्यतरत्वनियमात् अज्ञाननिवृत्तिलक्षणमोक्षोऽज्ञानं वा तत्कार्यं वेति वक्तव्यम् ।

उभयथाऽप्यज्ञाननिवृत्तित्वानुपपत्तेरित्यर्थः । कुत इत्यत आह ॥ प्रतियो-गितन्निवृत्त्योरिति ॥ प्रतियोगितन्निवृत्त्योर्भेदस्यावश्यकत्वान्नाज्ञानात्मकस्य तन्निवृत्तिरूपत्वमित्यर्थः । उपलक्षणमेतत् । प्रतियोगितन्निवृत्त्योरुपादानो-पादेयभावायोगादज्ञानोपादेयस्य मोक्षस्य नाज्ञाननिवृत्तिरूपत्वमिति बोध्यम् ॥ तादृशीति ॥ अज्ञानतत्कार्ययोरन्यतररूपानिर्वचनीयेत्यर्थः ।

टीका

**अथवा, अज्ञाननिवृत्तिर्यद्यात्मातिरिक्ता पञ्चमप्रकारोररीक्रियते तदा वक्तव्यम् । किमज्ञानकार्यम्? न वा? इति । न तावद्द्वितीयः । आत्मातिरिक्तस्याज्ञानतत्कार्ययोरन्यतरत्वावश्यम्भावाभ्युपगमात् ।**

अज्ञाननिवृत्तेरज्ञानकार्यत्वनिरासः ।

**आद्ये बाधकमाह ॥ अज्ञानासम्भवेनेति ॥ यद्यज्ञाननिवृत्तिर-ज्ञानकार्या तदा अज्ञानस्य तदानीमवस्थानं स्यात् । न ह्युपादानेन विनोपादेयस्य स्थितिरस्ति । अज्ञाननिवृत्तावज्ञानासम्भवात् । तथाचाज्ञाननिवृत्तेरुभयथाऽप्यसम्भवेन स्वरूपमेव नास्ति । पञ्चम-प्रकारता तु दूरनिरस्तेति । किं च घटादीनां सत्त्वं, शशविषाणा-दीनामसत्त्वं, घटादीनामेव देशकालादिव्यवस्थाया सदसत्त्वमिति प्रकारत्रयस्यैवानुभवाच्चतुर्थप्रकार एव नास्ति । तदभावात् पञ्चम-प्रकारता तु मोक्षस्याष्टमरस इवात्यन्तासम्भाविनीत्याह ॥ चतुर्थप्रकारेति ॥**

मन्दारमञ्जरी

ननु 'अज्ञानासम्भवेन चतुर्थप्रकाराभावात्' इति ग्रन्थो यद्यज्ञानस्य स्वरूपत एवासम्भवेन मोक्षनिराकरणार्थस्तर्हि 'अज्ञानासम्भवादेव तन्म-तमखिलमपाकृतम्' इत्यनेन सह पुनरुक्तिः स्यात् । अज्ञानासम्भवस्य

वादान्तरसाध्यत्वात् सापेक्षत्वं च स्यादिति पूर्वत्रापरितोषादन्यथा व्याचष्टे ॥ अथ वेति ॥ अभावज्ञानस्य प्रतियोगिज्ञानाधीनत्वाद् विकल्पसमये पश्चान्निर्दिष्टमप्यज्ञानकार्यं नेति पक्षं पराभिप्रेतत्वात्, आद्यपक्षोत्तरत्वेन 'अज्ञानासम्भवेन' इति मूलग्रन्थावयवं व्याख्यातुं चाऽदौ दूषयति ॥ न तावदिति ॥ तत्र हेतुः ॥ आत्मातिरिक्तस्येति । यद्यपि, पदार्थो हि त्रिप्रकारः । आत्मा अज्ञानं तत्कार्यं चेति । तथा च चतुर्थप्रकाराभावादात्मातिरिक्तस्य मोक्षस्य अज्ञानतत्कार्ययोरन्यतरत्वनियमात्तत्र चाज्ञाननिवृत्तेरज्ञानत्वायोगात् परिशेषादज्ञानकार्यत्वावश्यम्भावादज्ञानकार्यं नेति पक्षो न युक्त इत्यर्थ, इत्यनेन प्रकारेण 'चतुर्थप्रकाराभावात्' इत्येतदेव द्वितीयपक्षदूषणपरतया व्याख्यातुं शक्यते । तथाप्येवं व्याख्याने प्रतिपत्तिगौरवप्रसङ्गात् टीकाकारेण द्वितीयपक्षो बहिरेव दूषित इति द्रष्टव्यम् ।

**आत्मातिरिक्तस्य परीत्या अविद्यातत्कार्यान्यतरत्वसमर्थनम् ।**

नन्वात्मातिरिक्तस्याज्ञानतत्कार्ययोरन्यतरत्वं नाभ्युपगम्यते, अनिर्वचनीयस्यैव तदभ्युपगमादिति चेन्न । पञ्चमप्रकारायामप्यविद्यानिवृत्तौ सदसद्विलक्षणत्वरूपानिर्वचनीयत्वस्यापि सत्त्वात् । ननु पञ्चमप्रकारे सदसद्विलक्षणवैलक्षण्यमस्तीति चेत्किं तावता । न हि सदसद्विलक्षणवैलक्षण्यराहित्यमप्यनिर्वचनीयत्वलक्षणान्तर्गतम् । तथात्वे तु शुक्तिरूप्यादौ घटादौ च सत्त्ववत्सदसद्विलक्षणत्वमपि मिथ्येति वदता त्वया तत्र सदसद्विलक्षणत्ववत्सदसद्विलक्षणवैलक्षण्यस्याप्यङ्गीकारेण लक्षणस्यासम्भवप्रसङ्गात् । ननु बाध्यत्वमनिर्वचनीयत्वम् । तच्च बाधकज्ञानानन्तरभाविन्यामविद्यानिवृत्तौ नास्तीति चेत्, यदि परमार्थसत्त्वाकारेण प्रतिपन्नोपाधौ निषिध्यमानत्वं बाध्यत्वं तर्हि तदविद्यानिवृत्तावप्यस्ति । न ह्यविद्यानिवृत्तिः परमार्थसती । सदद्वैतव्याकोपप्रसङ्गात् । पञ्चमप्रकारत्वहानिप्रसङ्गाच्च । अथ स्वरूपेणैव प्रतिपन्नोपाधौ निषिध्यमानत्वं बाध्यत्वम् ।

तच्चाविद्यानिवृत्तौ नास्तीति चेन्न । शुक्तिरूप्यादेरप्यविद्याकार्यस्य प्रतीति-वेलायामसद्विलक्षणस्वरूपेण विद्यमानतया स्वरूपेण निषेद्धुमशक्यतया बाध्यत्वलक्षणस्यासम्भवप्रसङ्गात् । किं चात्मातिरिक्तत्वादेवाविद्यानिवृत्तेः सदसद्विलक्षणत्वरूपं बाध्यत्वरूपं वा अनिर्वचनीयत्वं स्यात् । न चानिर्वचनीयत्वे निवृत्तिमत्त्वं प्रयोजकम् । अविद्यानिवृत्तेरात्मातिरिक्त-पदार्थत्वादेव निवृत्तेरपि प्रसङ्गात् । न च निवृत्तेर्निवृत्तावनवस्थाप्रसङ्गः, प्रतियोग्युन्मज्जनप्रसङ्गश्च । अनयोरपि दोषयोर्मयैवा पाद्यमानत्वात् । तव पक्षे घटादिनिवृत्तेर्निवृत्तावप्यनवस्थाभाववत्प्रतियोग्यनुन्मज्जनवच्चात्राप्युपपत्तेः। न च परमते घटादिनिवृत्तेरप्यनिवृत्तिः । चरमसाक्षात्कारात्प्राक् मुद्गरप्रहारादिना जाताया व्यावहारिक्या घटादिनिवृत्तेर्घटादिवच्चरमसाक्षा-त्कारेण निवृत्त्यवश्यम्भावात् ।

एतेन ज्ञाननिवर्त्यत्वमनिर्वचनीयत्वम् । तदेव चाविद्यातत्कार्य-योरन्यतरत्वे प्रयोजकम् । न त्वात्मातिरिक्तत्वम् । ज्ञाननिवर्त्यत्वं चावि-द्यानिवृत्तौ नास्तीति निरस्तम् । आत्मातिरिक्तत्वादेव ज्ञाननिव-र्त्यत्वस्याप्यापादितत्वात् ।

किं च आत्मातिरिक्ता अविद्यानिवृत्तिर्यद्यविद्यातत्कार्ययोरन्यतरा न स्यात्, तदा अद्वैतहानिः । न च तस्याः परमार्थसत्त्वाभावादद्वैतव्याकोपो नास्तीति वाच्यम् । असद्विलक्षणायास्तस्या अविद्यातत्कार्ययोरन्यतरत्वा-भावे परमार्थसत्त्वावश्यम्भावात् । न च परमार्थसत्त्वे आत्मत्वं प्रयोजकम्। अविद्यातत्कार्ययोरन्यतरत्वाभावेन आत्मत्वस्याप्यापादयितुं शक्यत्वात् । किं च अविद्यानिवृत्तेरव्यावहारिकत्वादप्रातिभासिकत्वाच्च पारमार्थिकत्वा-वश्यम्भावः। तस्मादद्वैतहानिपरिहारार्थमविद्यातत्कार्ययोरन्यतरत्वमभ्युपग-न्तव्यमिति युक्त 'अविद्यातत्कार्ययोरन्यतरत्वावश्यम्भावाभ्युपगमात्' इति।

आद्यपक्षोत्तरत्वेन अज्ञानासम्भवात् इत्येतं वाक्यावयवं व्याचष्टे ॥ आद्य इति ॥ ननु उपादानेन विनोपादेयस्य स्थितिर्नास्ति चेन्मोक्षावस्था-यामपि अज्ञानमस्त्वित्यत आह ॥ अज्ञाननिवृत्ताविति ॥ अज्ञाननिवृत्तौ

च अज्ञानासम्भवादेवेति एवशब्दाध्याहारेण योज्यम् । 'चतुर्थ-प्रकाराभावात्' इत्येतं वाक्यावयवं दूषणान्तरपरतया व्याचष्टे ॥ किं चेत्यादिना ॥ घटादीनामेव देशकालेति ॥ ननु यथा घटादेः स्वदेशादौ सत्त्वं, देशान्तरादावसत्त्वमिति सदसत्त्वलक्षणस्तृतीयः प्रकारः, एवं स्वदेशादौ असद्विलक्षणत्वं, देशान्तरादौ तु सद्विलक्षणत्वमिति सदसद्विलक्षणत्वलक्षणश्चतुर्थप्रकारोऽपि देशकालादिव्यवस्थया अस्त्येवेति चेन्मैवम् । अभावाभावस्य भावत्वेन स्वदेशादौ सत्त्वातिरिक्तस्यासद्विल-क्षणत्वस्य देशान्तरादौ चासत्त्वातिरिक्तस्य सद्विलक्षणत्वस्याननुभवात् । अत एव प्रकारत्रयस्यैवानुभवात् इत्युक्तम् ।

**श्रीनिवासतीर्थीयटिप्पणी**

अज्ञानकार्यं न वेत्यत्राज्ञाननिवृत्तिरिति वर्तते ॥ अवश्यंभावेति ॥ आवश्यकत्वेत्यर्थः । तन्मते पदार्थस्त्रिप्रकारः । आत्मा, अज्ञानं, तत्कार्यं चेति । तथा च अज्ञाननिवृत्तेरात्मातिरिक्तत्वे अज्ञानतत्कार्ययोरन्यतरत्वं वाच्यम् । तत्राज्ञाननिवृत्तेरज्ञानत्वायोगेन परिशेषादज्ञानकार्यत्वावश्यं भावादज्ञानकार्यं नेति पक्षो न युक्त इति भावः । तदा तर्हि । तदानीम् अज्ञाननिवृत्तिदशायाम् । कुत इत्यत आह ॥ न हीति ॥ तर्ह्यस्त्व-ज्ञाननिवृत्तिदशायाम् अज्ञानमित्यतोऽज्ञानासंभवेनेति मूलाभिप्रायमाह ॥ अज्ञाननिवृत्ताविति ॥ अज्ञाननिवृत्तिदशायामित्यर्थः। प्रतियोगितदत्यन्ता-भावयोरेककालतया विरुद्धत्वादिति भावः । ॥ उभयथेति ॥ अज्ञात-कार्यत्वतदभावविकल्पाभ्यामित्यर्थः ॥ स्वरूपमेवेति ॥ अज्ञाननिवृत्ति-रूपमोक्षस्वरूपमेवेत्यर्थः ॥ दूरेति ॥ प्रकारिण एवाभावादिति भावः । अस्यां योजनायां चतुर्थप्रकाराभावादित्यु- वैरितम् । तद्योजयति ॥ किं चेत्यादिना ॥ देशकालादिव्यवस्थयेति ॥ आदिपदेन प्रकारग्रहणम् । तथा च घटस्य हि स्वोपाधौ सत्त्वं, परोपाधावसत्त्वम् । इदानीं सत्त्वं कालांतरे असत्त्वं, घटत्वेन प्रकारेण सत्त्वं, पटत्वादिप्रकारेणासत्त्वमिति व्यवस्थयेत्यर्थः ॥ अनुभवादिति ॥ तथा च दृष्टानुसारिणी हि कल्पना

दृष्टा। घटादिप्रपंचे प्रकारत्रयस्यैवानुभूयमानत्वेनाज्ञाननिवृत्तावपि व्यवस्थाया सत्त्वासत्त्वसदसत्त्वरूपप्रकारत्रयस्यैव वाच्यत्वादिति भावः ॥ चतुर्थप्रकार एवेति ॥ अननुभूयमानत्वादिति भावः ॥ अष्टमरस इवेति ॥ लोके षड्रसानामेवानुभवेन सप्तमरसस्यानुभूयमानत्वाभावे अष्टमरसो यथाऽत्यंतासंभावितस्तद्वदित्यर्थः ।

**श्रीगुरुराजीयटिप्पणी**

॥ अष्टमरस इवेति ॥ एतच्च चित्ररसो नास्तीति मतमनुसृत्योक्तम् । तत्सद्भावमते तु अष्टमरसपदेन नवमरसो ग्राह्य इति ध्येयम् ।

**टीका**

मायावादे अधिकार्यभावविवरणम् ।

अज्ञानासम्भवादधिकारी च निरस्त इत्युक्तम् । तद्विवरणार्थमाह–

मायावादखण्डनम्

**विषयप्रयोजनाभावादेवाधिकारी च ।**

**टीका**

निरस्त इति सम्बन्धः । यो हि यत्प्रयोजनमर्थयमानो यं विषयं जिज्ञासते स एव तत्राधिकारी भवति । प्रकृते चाज्ञानासम्भवेन विषयप्रयोजने निराकृते इति तदभावादेव तदविनाभूतोऽधिकारी च निरस्तो वेदितव्यः ।

मायावादे सम्बन्धाभावोपपादनम् ।

अज्ञानासम्भवात् सम्बन्धाभाव उक्तः । तमुपपादयति–

मायावादखण्डनम्

तदभावादेव सम्बन्धोऽपि ।

टीका

**सतामेव हि सम्बन्धो भवति । अज्ञानासम्भवेन विषयाद्यभावश्चोपपदितः । अतो विषयाद्यभावात् सम्बन्धोऽपि निरस्त एवेति ।**

मन्दारमञ्जरी

॥ निरस्त इत्युक्तमिति ॥ 'अज्ञानासम्भवादेव तन्मतमखिलमपाकृतम्' इत्यत्रेत्यर्थः ॥ तदभावादेवेति ॥ विषयप्रयोजनयोः प्रत्येकमधिकारिणं प्रति व्यापकत्वाद्विषयप्रयोजनाभावयोः प्रत्येकमधिकार्यभावे हेतुत्वं द्रष्टव्यम् ॥ सम्बन्धोऽपि निरस्त इति ॥ अधिकारिविषयादेर्ज्ञातृ-ज्ञेयभावादिसम्बन्धो निरस्त इत्यर्थः ।

श्रीनिवासतीर्थीयटिप्पणी

॥ तदभावादेवेति ॥ विषयप्रयोजनयोरभावादेवेत्यर्थः । तदविनाभूत इति । विषयादिघटितलक्षणक इत्यर्थः ॥ सतामेव हीति ॥ न हि शशशृंगनृशृंगयोः संबंधोऽस्तीति भावः ॥ विषयाद्यभावादिति ॥ संबंधिनामेवाभावादिति भावः ॥

मायावादपरशुः

॥ अधिकारी च निरस्त इत्युक्तमिति ॥ अज्ञानासंभवादेव तन्मतमखिलमपाकृतमित्यनेनोक्तमित्यर्थः ॥ सतामेवेति ॥ साध्यसाधनभावलक्षणः संबंधः सतामेव भवतीति असतोर्विषयप्रयोजनयोर्न साध्यसाधनभावः। एवमधिकारिप्रयोजनयोर्लब्धृलब्धव्यभावसंबंधश्च नेत्यर्थः। एतेनासतामपि शशविषाणादीनां तज्ज्ञानस्य विषयविषयिभावलक्षणसंबंधसद्भावात्सतामेव संबंधो भवतीत्ययुक्तमिति परास्तम् ।

टीका

श्रुतिस्मृतिभ्यां विष्णोः सर्वोत्तमत्वस्यैव सर्वशास्त्रार्थत्वसमर्थनम् ।

**एवं वेदादेर्जीवब्रह्मणोरेकत्वप्रतिपादकत्वे अनारम्भणीयत्वप्रसङ्गान्न तत्प्रतिपादकत्वमित्युक्तम् । इदानीं परमाप्ततमेन भगवता**

श्रुत्या च विष्णोः सर्वोत्तमत्वस्यैव सर्वशास्त्रप्रतिपाद्यतया अभिहितत्वाच्च तदेव वेदादिप्रतिपाद्यं नाऽत्मब्रह्मैक्यमित्याह–

मायावादखण्डने उदाहृताः गीताश्लोकाः तट्टीका च ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।

'इमौ' इति प्रमाणसिद्धतां सूचयति । पुरुषौ चेतनौ । एवशब्दस्य द्वावेवेति सम्बन्धः । तद्घटनाय परमपुरुषं व्यावर्तयितुं लोक इत्युक्तम् ।

क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

तदनेनोत्तमपुरुषनिरूपणस्यापेक्षितं पुरुषनिरूपणं कृतम् । ततः किमित्यत आह–

उत्तमः पुरुषस्त्वन्यः....।

अन्यः क्षराक्षराभ्याम् । न त्वनयोरेवैकः पुरुषोत्तमः कल्प्यत इति भावः । अन्यस्योत्तमपुरुषत्वे श्रुत्यादिसंमतिमाह–

........परमात्मेत्युदाहृतः ।

आत्मशब्दोऽत्र चेतनपर्यायः । युक्तिं चाऽह–

यो लोकत्रयमाविश्य विभर्ति....।

यो हि यस्य भर्ता स तस्मादुत्तमो युक्तः । आविष्टस्य तन्नाशे नाशप्रसङ्ग इत्यत आह–

.....अव्ययः...।

तत्कथम्? ऐश्वर्यादित्याह–

....ईश्वरः ।

स च कः? इत्यतोऽहमेवेति सप्रमाणकमाह–

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

क्षरं चातीत इति चशब्दान्वयः । लोकशब्देन पौरुषेयागम उच्यते । तात्पर्यद्योतनाय वेत्तुः फलमाह–

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥

एवमित्यस्य व्यावृत्तिनिरासः असंमूढ इति । न पुनरश्व-कर्णादिवत् सञ्ज्ञामात्रत्वेनेत्यर्थः । स सर्ववित्, अस्यैव सर्व-शास्त्रार्थत्वात् । सर्वभावेन सर्वप्रकारेण । एतच्च न यस्मै कस्मै वाच्यमित्याह–

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
स सर्वविदित्याद्युक्तं । ततः किम्? इत्यत आह–
एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥
बुद्धिमान् अपरोक्षज्ञानी । कृतकृत्यो मुक्तः ।
इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥

आत्मा महानिति सामानाधिकरण्यम् । न परं किञ्चित् । किन्तु ? सा काष्ठा स एवावधिः । कुत एतत् ? सा परा गतिः, गम्यत इति गतिः । एवं सर्वशास्त्रैः प्रतिपाद्यत इत्याह–

भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ।

**सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं मुख्यतो वेदप्रतिपाद्यत्वमिति सूत्रार्थोऽत्राभिमतः ।**

**इति विष्णोः सर्वोत्तमत्वमेव शास्त्रार्थत्वेन भगवता श्रुत्या चाभिहितम्**

**मन्दारमञ्जरी**

एवं युक्तिबलात् पराभिप्रेतं विषयादिकं निराकृत्येदानीमागमबलादपि पराभिप्रेतं विषयादिकं निराकृत्य स्वाभिप्रेतं विषयादिकं समर्थयते भगवानाचार्य इत्याह ॥ एवं वेदादेरित्यादिना ॥ 'क्षरश्चाक्षर एव चेति द्वौ' इति मूलग्रन्थ इतिशब्दोऽध्याहार्यः ॥ तद्घटनायेति ॥ 'लोके' इत्यनुक्तौ क्षराक्षरव्यतिरेकेणेश्वरस्यापि भावात् द्वावेवेत्यवधारणानुपपत्तिः । अत ईशितव्यवर्गवाचिलोकशब्दप्रयोग इत्यर्थः । 'क्षरः सर्वाणि' इति पादद्वयस्यायमर्थः । सर्वाणि भूतानि ब्रह्मादयो जीवाः क्षरः शरीरक्षरणात् । कूटस्थः पुरुषो महालक्ष्मीः अक्षरः शरीरक्षरणाभावादिति ।

॥ न त्वनयोरेवैकः पुरुषोत्तमः कल्प्यत इति ॥ यद्यपि पुरुषोत्तम इत्यत्र न समानाधिकरणसमासः । 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति सूत्रेण प्रथमानिर्दिष्टस्योत्तमशब्दस्य पूर्वनिपातप्रसङ्गात् । नापि षष्ठीसमासः । 'न निर्धारणे' इति समासप्रतिषेधात् । तथापि 'पञ्चमी भयेन' इत्यत्र 'पञ्चमी' इति योगविभागाद्वा, 'कर्तृकरणे कृता बहुलं' इति बहुलग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वाद् बहुलग्रहणेन वा 'ग्रामान्निर्गतः' इत्यादाविव पञ्चमीसमासो द्रष्टव्यः । अत एव च 'अक्षरादपि चोत्तमः' इति निर्देशो घटते ।

अन्ये तु, 'यतश्च निर्धारणं' इति निर्धारणे सप्तम्या अपि विधानात्तस्याश्च समासाप्रतिषेधात्सप्तमीसमास इत्याहुः ।

॥ आत्मशब्दोऽत्रेति ॥ 'परमात्मा व्यवस्थित', 'आत्मा नारायणः परः'॥ इत्यादिश्रुत्या नारायणपरतया प्रयुक्ते परमात्मशब्दे आत्मशब्दश्चेतनपर्यायः परमशब्दश्चोत्तमपर इति प्रसिद्धमेव । तथा च परमात्मशब्द एव चेतनोत्तमत्वरूपपुरुषोत्तमत्वं तस्य वदतीत्यर्थः ॥ भर्तेति ॥ धारणपोषणकर्तेत्यर्थः ॥ क्षरं चातीत इति चशब्दान्वय इति ॥ अपिशब्दमात्रस्य त्वक्षरादप्युत्तम इत्यन्वय इत्यर्थः । ननु क्षराक्षरातीतत्वरूपेणोक्तेन प्रकारेण कथं पुरुषोत्तमत्वम् ? क्षराक्षरातीतत्वे मानाभावात् । न च पुरुषोत्तमशब्दावयवशक्तिपर्यालोचनया तत्सिद्धिरिति वाच्यम् । तस्याश्वकर्णादिशब्दवत् सञ्ज्ञात्वेनाप्युपपत्तेः । तस्मात् एवं इत्येतन्नोपपद्यत इत्याशङ्क्याह ॥ एवमित्यस्येति ॥

ब्रह्मा शिवः सुरेशाद्याः शरीरक्षरणात् क्षराः ।
लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः ॥

इत्यादिश्रुतिसिद्धत्वादेवाश्वकर्णादिशब्दवत् सञ्ज्ञामात्रमिति संमोहवर्जित इति वदता असंमूढपदेन एवमित्यस्य व्यावृत्तिनिरासः कृत इत्यर्थः।

नन्वत्र विष्णोः सर्वोत्तमत्वमेवोच्यते । न तु श्रुत्यादेस्तत्र तात्पर्यमित्याशङ्क्य आत्मपुरुषोत्तमत्वज्ञस्य सर्वविदित्यनेन सर्वज्ञत्वं तावदुच्यते । न च पुरुषोत्तमत्वज्ञानमात्रेणेश्वरवत् मुख्यं सर्वज्ञत्वं युक्तम् । पुरुषोत्तमत्वस्य सर्वात्मकत्वाभावात् । तथा च मुमुक्षुणा ऋगादिशास्त्रार्थस्यैव ज्ञातव्यत्वात् पुरुषोत्तमत्वस्य च सर्वशास्त्रार्थत्वात्तज्ज्ञानेन ज्ञातव्यं सर्वं ज्ञातं भवतीत्यनेन प्रकारेण पुरुषोत्तमत्वज्ञस्य सर्वज्ञत्वं वक्तव्यम् । तथा च सर्वविदित्यनेन पुरुषोत्तमत्वस्य सर्वशास्त्रार्थत्वसिद्धिरिति भावेनाऽऽह ॥ अस्यैव सर्वशास्त्रार्थत्वादिति ॥ ततः किमितीति ॥ यो मामेवमित्यादिना फलं वक्तुमुपक्रान्तम् । सर्वविदित्यादिना च सर्वशास्त्रार्थज्ञानपूर्विका भगवत्सेवोक्ता । ततश्च तस्याः स्वतः फलरूपत्वाभावात् फलान्तरं वक्तव्यमिति भावः ॥ बुद्धिमानपरोक्षज्ञानीति ॥ परोक्षज्ञानस्य 'बुद्ध्वा' इत्यनेनैवोक्तत्वादित्यर्थः ।

'इन्द्रियेभ्यः परा ह्यर्थाः' इति श्रुताविन्द्रियादिशब्दा अभिमान्यधिकरणन्यायेनेन्द्रियाद्यभिमानिदेवतापरा इति द्रष्टव्यम् ॥ आत्मा महानिति सामानाधिकरण्यमिति ॥ 'बुद्धेरात्मा परः' इति 'आत्मनो महान् परः' इति आत्मशब्दावृत्त्या परशब्दावृत्त्या च आत्मा महानित्यनयोर्वैयधिकरण्यं नाशङ्कनीयम् । बुद्धितत्त्वाभिमानिन्याः सरस्वत्या अनन्तरं महत्तत्त्वाभिमानिचतुर्मुखब्रह्मणोऽर्वाक् आत्मशब्दाभिधेयायां अन्यस्या देवताया अभावादित्यर्थः ।

**'इन्द्रियेभ्यः' इति श्रुतिगतपुरुषशब्दस्य नारायणपरत्वसमर्थनम्**

अस्यां च श्रुतौ पुरुषशब्दो नारायणपरः 'पुरुषो ह वै नारायणः', 'सहस्रशीर्षा पुरुषः' इत्यादौ तत्प्रयोगात् । अस्यामेव श्रुतौ 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति पूर्वत्र विष्णोः प्रस्तुतत्वाच्च ।

नन्वत्र 'सा काष्ठा' इत्यनेन विष्णोः सर्वोत्तमत्वमेवोक्तं, न तु 'तस्योत्तमत्त्वं सर्वशास्त्रार्थः' इति । तत्कथमियं श्रुतिर्विष्णोः सर्वोत्तमत्वमेव सर्वशास्त्रार्थ इत्यस्मिन्नर्थे प्रमाणीक्रियते ? इत्याशङ्क्य 'सा परा गतिः' इत्यनेन सर्वोत्तमत्वमेव सर्वशास्त्रार्थ इत्युक्तमिति दर्शयितुं श्रुतौ 'सा काष्ठा' इति स्वोक्तार्थे 'सा परा गतिः' इति हेतुकथनम् । न तु 'सा परा गतिः' इत्येतदपि सर्वोत्तमत्वमात्रं प्रतिपादयति, 'सा काष्ठा' इत्यनेन पुनरुक्तिप्रसङ्गादिति भावेन सा परा गतिरित्येतद्व्याख्यातुं तदवतारयति ॥ कुत एतदिति ॥ एतदवधित्वं कुत इत्यर्थः । अत्र गतिशब्दः कर्मसाधन इत्याह ॥ गम्यत इति ॥ गम्यत इति व्युत्पत्त्या लब्धं गतिशब्दार्थमाह ॥ एवं शास्त्रैरिति ॥ यद्यपि कर्मसाधनेन गतिशब्देन ज्ञेयत्वमेवोक्तं तथापि शास्त्रैकसमधिगम्यस्यान्येन ज्ञेयत्वानुपपत्तेः शास्त्रैः प्रतिपाद्यत इत्युक्तम् । एवं गतिशब्देन शास्त्रप्रतिपाद्यत्वमात्रे लब्धेऽपि परा गतिः परं प्रतिपाद्यमिति प्रतिपाद्यत्वस्य परशब्देनोत्कृष्टताया उक्तत्वात्, उत्कृष्टत्वस्य चैकदेशप्रतिपाद्यत्वेऽनुपपत्तेः

सर्वशास्त्रप्रतिपाद्यत्वसिद्धिरिति भावेन सर्वग्रहणम् । एवं परा गतिरित्यनेन सर्वशास्त्रप्रतिपाद्यत्वमात्रे लब्धेऽपि केन प्रकारेण परा गतिः सर्वशास्त्र-प्रतिपाद्यमिति जिज्ञासायां सा काष्ठेति पूर्वप्रस्तुतमवधित्वलक्षणं सर्वोत्त-मत्वमेव प्रकारो भवतीति भावेनोक्तम् ॥ एवमिति ॥ एतदवधित्वं कुतो हेतोरिति प्रश्नस्य 'एवं सर्वशास्त्रैः प्रतिपाद्यते' इत्येतस्माद्धेतो-रेतदवधित्वमित्युत्तरं दत्तम् ।

ननु भूम्नः क्रतुवज्ज्यायस्त्वमिति सूत्रं 'पूर्णत्वरूपस्य भूमगुणस्य पूर्णानन्दः पूर्णज्ञान इति सर्वगुणविशेषणतया सर्वोपास्यत्वलक्षणं ज्यायस्त्वं विवक्ष्यते' इति भाष्ये व्याख्यातम् । तथा च सर्वोत्तमत्वरूपस्य पूर्णत्वाख्यभूमगुणस्य सर्ववेदप्रतिपाद्यत्वे कथमिदं सूत्रं प्रमाणीक्रियत इत्याशङ्क्य प्रकारान्तरेण सूत्रव्याख्यानं विवक्षित्वा भाष्यकारेण स्वोक्तार्थे सूत्रं प्रमाणीकृतमित्याह ॥ सर्वगुणेष्विति ॥

**श्रीनिवासतीर्थीयटिप्पणी**

इति विष्णोः पुरुषोत्तमत्वमेवेति वक्ष्यमाणमूलं व्याकुर्वन्नाह ॥ परमाप्तमेनेत्यादिना ॥ क्षराक्षरयोः समस्तयोरपि प्रत्यक्षसिद्धत्वाभावाद् द्वाविमावित्यनुपपन्नमित्यत आह ॥ इमाविति ॥ ननु 'ब्रह्मा शिवस्सु-रेशाद्याः शरीरक्षरणात् क्षराः' इति प्रमाणानुसारेण ब्रह्मादिपुरुषाणामिव सरस्वत्यादीनां स्त्रीणामपि शरीरक्षरणयोगेन क्षरशब्दवाच्यत्वावगमात्, पुरुषौ द्वावित्युक्ते सरस्वत्यादिस्त्रीणामक्षरशब्दवाच्यरमायाश्चासंग्रहापत्त्या तत्संग्रहाय पुरुषशब्दार्थमाह ॥ पुरुषौ चेतनाविति ॥ चशब्दः अन्यसमु-च्चायकः । एवशब्दश्चान्यव्यावर्तकः । तथाच विरुद्धयोस्तयोरेकत्र समवेशायोगाद्भिन्नक्रमेणैव संबंधं दर्शयति ॥ एवशब्दस्येति ॥ तद्घट-नायेति ॥ परमपुरुषस्य तृतीयस्य वक्ष्यमाणत्वात् द्वावेवेत्येतदनुपपन्नमि-त्याशंक्य द्वावेवेत्यस्योपपत्तय इत्यर्थः ॥ लोक इति ॥ ईशितव्यवर्ग इत्यर्थः।

क्षरस्सर्वाणि भूतानीत्यादेरयमर्थः– सर्वाणि भूतानि ब्रह्मादयो जीवाः शरीरक्षरणयोगेन क्षरशब्देनोच्यंते । यथोक्तम् । 'ब्रह्मा शिवस्सुरेशाद्याः शरीरक्षरणात् क्षराः' इति । कूटस्थः । 'कूटं खं विदलं व्योम संधिराकाश उच्यते' इत्यभिधानात् कूटमव्याकृताकाशः। तद्वन्निर्विकारतया स्थितत्वात्, कूटे अव्याकृताकाशे अभिमानितया स्थितत्वाद्वा कूटस्थशब्दवाच्या महालक्ष्मीः अक्षरदेहत्वनिमित्तेनाक्षर इत्युच्यत इत्यर्थः। यथोक्तम्– 'लक्ष्मीरक्षरदेहत्वादक्षरा' इति । पुंवच्छक्तियुक्तत्वात्पुल्लिंगशब्दवाच्यत्वं युक्तम् । यथाऽऽहुः— 'पुल्लिंगेनोच्यते श्रीश्च पुंवच्छक्तिमती यतः' इति ॥ अपेक्षितमिति ॥ उत्तमत्वस्यावधिसापेक्षत्वादिति भावः । सम्मतिः समाख्या ॥ उदाहृत इति ॥ 'परमात्मा व्यवस्थितः' इति श्रुतावुक्त इत्यर्थः । ननु निर्णीतस्थले समानोक्तिः समाख्या । तथा च यदीयम् अर्थसमाख्या तर्हि परमचेतन इति वक्तव्यम् । यदि च शब्दसमाख्या तर्हि परमपुरुष इति वक्तव्यम् । आत्मेति कथमुक्तमसंगतत्वादित्यत आह ॥ आत्मशब्दोऽत्रेति ॥ तथा चेयमर्थसमाख्येति भावः ॥ युक्तिं चाऽहेति ॥ क्षराक्षरान्यस्योत्तमपुरुषत्वे श्रुत्यादिसम्मतिमुक्त्वा युक्तिं चाऽहेत्यर्थः ॥ आविष्टस्येति ॥ लोकत्रयं प्रविष्टस्येत्यर्थः । तन्नाशे लोकत्रयनाशे ॥ नाशप्रसंग इति ॥ दह्यमानगेहांतर्गतपुरुषवदिति भावः ॥ तत् अव्ययत्वम् ॥ ऐश्वर्यादिति ॥ अघटितघटकशक्तिसंपन्नत्वादित्यर्थः । अग्निस्तंभविद्यावतो दाहाभाववदिति भावः । एकार्थयोश्चापि शब्दयोरन्यतरवैयर्थ्यमाशंक्याऽह ॥ क्षरं चेति ॥ तात्पर्येति ॥ स्वस्य पुरुषोत्तमत्व इत्यर्थः ॥ फलमिति ॥ 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये' इति वचनेन फलस्य तात्पर्यद्योतकत्वावगमादिति भावः ॥ एवमित्यस्य व्यावृत्तिनिरास इति ॥ पुरुषोत्तम इत्यस्य यस्मात् क्षरमतीतोऽहमित्यादिना यौगिकोऽर्थ उक्तः । स एवमित्यनेन परामृश्यते । एवं च एवमित्यस्य यौगिकार्थस्य व्यावृत्तिर्नाम रूढिः । तन्निरासोऽसंमूढ इत्यनेन क्रियते । तथा चैवमसंमूढपदाभ्याम् इत्युक्तं भवति । तद्व्यावर्त्यं

दर्शयति । न त्वश्वकर्णादिवदिति ॥ संज्ञामात्रत्वेनेति ॥ रूढिमात्रत्वेनेत्यर्थः । यद्वा, एवमित्यस्य यौगिकार्थस्य व्यावृत्तिर्मिथ्यात्वं तन्निरासोऽसंमूढ इति पदेन क्रियते । तदभिप्रायमाह– न त्वश्वकर्णादिवदिति । यथाऽश्वकर्णादिवद्विद्यमानकर्णवत्त्वं पुरुषे अपारमार्थिकं, कुतः? संज्ञामात्रत्वात्, एवमुक्तरीत्या यौगिकं पुरुषोत्तमत्वं हरावपारमार्थिकं संज्ञामात्रत्वादित्यादि सम्मोहवर्जित इत्यर्थः। अनेनैवाभिप्रायेणोक्तं विष्णुतत्त्वनिर्णयटीकायाम् ॥ 'एतच्च पुरुषोत्तमत्वम् अपारमार्थिकमिति सम्मोहवर्जितः' इति । सर्वभावेनेत्येत दन्यथाप्रतीतिनिरासाय व्याचष्टेति ॥ सर्वप्रकारेणेति ॥ बुद्ध्वा बुद्धिमानित्यनयोः पौनरुक्त्यपरिहाराय व्याचष्टे ॥ बुद्धिमानपरोक्षज्ञानीति ॥ मतुपोऽतिशयार्थत्वात् । अपरोक्षज्ञानस्य परोक्षज्ञानादतिशयितत्वादित्यर्थः । तथा (च) बुद्ध्वेत्येतत्परोक्षतो बुद्ध्वेति व्याख्येयमिति भावः । इंद्रियेभ्यः परा ह्यर्था इति श्रुताविंद्रियादिशब्दाः अभिमान्यधिकरणन्यायेन तत्तदभिमानिदेवतापरा इति ज्ञातव्यम् । बुद्धेरात्मा परः, आत्मनश्च महान् पर इति वैयधिकरण्येन योजनाशंकां परिहरति ॥ आत्मा महानितीति ॥ बुद्धितत्वाभिमानिसरस्वत्यनंतरं महत्तत्वाभिमानिचतुर्मुखादर्वाक् अन्यस्योत्तमस्याभावादिति भावः । तथा च आत्मा विरिंचः सुमना इत्यभिधानात् महत्तत्वाभिमानी आत्मा विरिंचः बुद्धेः सरस्वत्याः सकाशात् पर इत्यर्थः । पुरुषो नारायणः । 'पुरुषो ह वै', नारायणः 'सहस्रशीर्षा पुरुषः' इत्यादिश्रुतेरिति भावः । अवधिरिति । तारतम्यांतर्गत इत्यर्थः । कुत एतदिति ॥ तारतम्यान्तर्गत्वरूपमवधित्वं कुतः प्रमाणात् प्रतिपत्तव्यम् ? प्रमाणाभावादनुपपन्नमिति यावदित्यर्थः । ननु परा गतिरित्यंतेन किं प्रमाणमुक्तमित्याशंक्य गतिशब्दस्य भावकरणार्थप्रतीतिनिरासाय कर्मसाधनत्वम् अभिप्रेत्य गतिशब्दं व्याख्याति ॥ गम्यत इति गतिरिति ॥ अवगम्यत इत्यर्थः । गतिशब्दं प्रयुंजानायाः श्रुतेः सर्वशास्त्राण्येव तत्र प्रमाणतया अभिप्रेतानीत्याशयेनाऽह ॥ एवमिति । एतदवधित्वमेव तारतम्यांतर्गतत्वेन सर्वशास्त्रैः प्रतिपाद्यत इति हेतोरुपपद्यत इत्यर्थः ।

एतदिति प्रश्नधर्म्यंशानुवादः । दृश्यते च धर्म्यंशानुवादेनाप्युत्तराभिधानं 'कःस्विदेकाकी चरति?' इति प्रश्ने य एकाकी चरति स सूर्य इत्यभिप्रेत्य 'सूर्य एकाकी चरति' इत्यादौ । तद्वदिहापीति ज्ञातव्यम् । भूम्न इति सूत्रम् । पूर्णज्ञानः पूर्णानंद इति ज्ञानादिसर्वगुणविशेषणतया पूर्णत्वरूप-भूमगुणस्य सर्वोपास्यत्वरूपं ज्यायस्त्वं विवक्षितमिति भाष्योक्तव्या-ख्यानस्य अत्रानुपयुक्तत्वात् प्रकृतोपयुक्ततयाऽभिप्रेतं सूत्रार्थमाह ॥ सर्वगुणेष्विति ॥ भूमगुणस्येति ॥ सर्वोत्तमत्वरूपपूर्णत्वाख्यभूमगुण-स्येत्यर्थः । श्रुत्या चाभिहितमित्यनंतरं तदेव वेदादिप्रतिपाद्यं न ब्रह्मात्मै-क्यमित्युक्तरीत्या शेषो द्रष्टव्यः । अत्र 'इति विष्णोः' इति वाक्यं टीकाकाराणामेव, न भगवत्पादवाक्यम् । कचिन्मूलकोशे पाठादर्शनादिति केचित् सांप्रदायिका आहुः । बहुमूलकोशेषु पाठदर्शनात् भगवत्पादीयं वाक्यमेवेति बहवः सांप्रदायिका इति ज्ञातव्यम् ।

**श्रीगुरुराजीयटिप्पणी**

'ब्रह्मरुद्रादयः सर्वे शरीरक्षरणात् क्षराः । श्रीरक्षरात्मेत्युदिता' इत्यादिगीतातात्पर्योदाहृतैतद्वाक्यव्याख्यानरूपनारायण श्रुतावक्षरात्मेत्या-त्मपदप्रयोगात् द्वाविमौ पुरुषाविति पुरुषशब्दस्य चेतनार्थत्वान्न श्रियः पुरुषत्वविरोध इति भावेनाह ॥ पुरुषौ चैतनाविति ॥

॥ पुरुषोत्तम इति ॥ नन्वत्र न सामानाधिकरणसमासोऽङ्गीकर्तुं शक्यः । तथा सति 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति सूत्रेण प्रथमानिर्दिष्टस्योत्तमशब्दस्य पूर्वनिपातप्रसङ्गात् । नापि षष्ठीसमासः । न 'निर्धारणे इति निर्धारणषष्ठ्याः समासप्रतिषेधादिति चेदत्र ब्रूमः । 'पञ्चमी भयेन' इत्यत्र पञ्चमीति योगविभागाद्वा, 'कर्तृकरणे कृता बहुलम्' इत्यत्र बहुलग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात् बहुलग्रहणेन ग्रामनिर्गत इत्यादाविव पञ्चमीसमास एव । अत एव क्षराक्षरादपि चोत्तम इति निर्देशो घटत इति । यद्वा, नृणां द्विजः श्रेष्ठ इतिवत्

जात्यादिभिरेकदेशस्य समुदायादपृथक्करणान्निर्धारणाभावात् शेषषष्ठ्याऽयं समासः । यस्मान्निर्धार्यते यश्चैकदेशो निर्धार्यते यश्च निर्धारणहेतुरेतत्त्रितयसंन्निधाने सत्येव निर्धारणं भवतीति, तत्रैव षष्ठीसमासप्रतिषेध इति द्विवचनं विभज्येति सूत्रे कैयटोक्तेः । अथवा, यतश्च निर्धारणम्' इति निर्धारणे सप्तम्या अपि विधानात्तस्याश्च समासाप्रतिषेधात् पुरुषेषु उत्तम इति निर्धारणसप्तम्या संज्ञायामिति समासः । न चैवं निर्धारण इत्यनर्थकं तद्विषयेऽपि तत्प्रसङ्गादिति चेन्न । नानर्थक्यं, स्वरभेदात् । सप्तमीसमासे हि तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरः स्यात् । षष्ठीसमासे त्वन्तोदात्तत्वमिति ।

ननु विष्णोरुत्तमपुरुषत्वे 'परमात्मेत्युदाहृतः' इत्यागमसंमतिप्रदर्शनं किं शब्दसाम्येनाभिमतं किं वाऽर्थसाम्येन । नाद्यः । तथासति पुरुषोत्तम इत्याकारत्वापत्तेः । नान्त्यः । तथासति उत्तमश्चेतन इत्याकारतापत्तेरित्याशंक्यार्थसाम्येनैवागमसंमतिप्रदर्शनमित्यभिप्रेत्य तत्सिद्ध्यर्थं परमात्मशब्दे परमशब्दस्योत्तमत्वार्थत्वस्य सिद्धत्वात् तदनुक्त्वा आत्मशब्दस्य चेतनपरतामाह ॥ आत्मशब्दोऽनेति ॥ य एवं पुरुषोत्तमं जानाति स सर्वविदित्येतावतैवोपपत्तेरसम्मूढ इत्यनर्थकमित्यत आह ॥ एवमित्यस्य व्यावृत्तिनिरासोऽसंमूढ इति ॥ एवमित्यनेनोक्तस्य क्षराक्षरपुरुषोत्तमत्वस्य व्यावृत्तिः क्षराक्षरपुरुषोत्तमत्वस्यापारमार्थिकत्वान्न पुरुषोत्तमपदप्रवृत्तिनिमित्तत्वमित्येवंरूपानुपपत्तिः । तस्या निरासार्थम् असंमूढ इति विशेषणमित्यर्थः । असंमूढपदस्य तत्त्वनिर्णयटीकानुसारेण क्षराक्षरपुरुषोत्तमत्वमपारमार्थिकमिति संमोहवर्जितत्वार्थकत्वात्तेनोक्तधज्ञानस्य संमोहत्वसूचनद्वारा पुरुषोत्तमत्वस्य पारमार्थिकत्वलाभादुक्तोऽनेन पदप्रवृत्तिनिमित्तत्वानुपपत्तिशङ्कापरिहार इति भावः । एवं, क्षराक्षरोत्तमत्वेन न त्वन्यथेति एवमित्यनेन व्यावृर्तितमेव प्रकारं तत्स्वरूपप्रदर्शनपूर्वकं निषेधति ॥ नेति ॥

**मायावादपरशुः**

स्त्रीनपुंसकयोरपि सद्भावाल्लोके द्वावेवेत्ययुक्तमित्यत आह ॥ पुरुषौ चेतनाविति ॥ पुरुषशब्देन तयोरपि गृहीतत्वादेवेत्यवधारणं नानुपपन्नमिति भावः । ननु परमात्मेति पदेनात्मोत्तमत्वलाभेऽपि न चेतनोत्तमत्वलाभ इत्यत आह ॥ आत्मशब्द इति ॥ आत्मशब्दश्चेतनशब्दार्थप्रतिपादक इत्यर्थः ॥ वेत्तुरिति ॥ अनित्यमागमानुशासनमिति वैयाकरणैरेवाभि-धानादिट्प्रयोगो न कृत इति बोध्यम् । एतेन ज्ञानार्थकस्य विदेः सेट्त्वाद्वेदितुरित्येव भाव्यमिति परास्तम् । ननु 'यो मामेवमसंमूढः' इति मूलेऽसंमूढ इति व्यर्थमित्यत आह ॥ एवमित्यस्य व्यावृत्तिनिरासोऽसंमूढ इतीति ॥ एवंशब्दपरामृष्टस्य पुरुषोत्तमत्वस्य व्यावृत्तिबुद्धेरभावबुद्धेरसंमूढ इति शब्दः निरासक इत्यर्थः । नास्त्येव पुरुषोत्तमत्वमीश्वरस्येति व्यतिरेकनिश्चयस्यासंमूढशब्दो व्यावर्तकः । अधिकारिवर्गः पुरुषोत्तमत्व-विषये निश्चयवानेव, न तु संदेहवान् । ततश्च यत्र प्राज्ञानां न संदेहाव-काशोऽस्ति कथं तत्र प्रेक्षावता तद्व्यतिरेकोऽभ्युपगन्तव्य इति भावः ।

इतः परं टीकायां श्रूयमाणं 'न पुनरश्वकर्णादिवत् संज्ञामात्र-त्वेनेत्यर्थः' इति वाक्यं प्रक्षिप्तं न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । अश्वकर्णादिवत् संज्ञामात्रत्वेनेत्यर्थ इति नञर्थस्य शब्दार्थ-प्रवेशपक्षे बाधात् । न ह्यसंमूढपदस्योदाहृतार्थे शक्तिरस्ति, येन तदर्थकत्वं स्यात् । 'संज्ञामात्रत्वेनेत्यर्थो न' इत्यन्वये त्वसङ्गतिः । अर्थविशेषो-क्त्यनन्तरमेवार्थान्तरनिषेधस्य सङ्गतत्वात् । असंमूढशब्दस्योक्तार्थकत्व-प्रसक्त्यभावेन तन्निषेधे वैयर्थ्याच्च । अन्वयाभावेन संज्ञामात्रत्वेनेति तृतीयानुपपत्तेश्च ।

**टीका**

**एवं प्रकरणार्थमुपपाद्य तस्य प्रयोजनमाह–**

इति सर्वज्ञमुनिना मायावादतमोऽखिलम् ।
निरस्तं तत्त्ववादेन सतां संशयनुत्तये ॥

अन्यथा हि विप्रतिपत्तेः संशयो भवति । प्रकरणार्थमुपसंहरन् तदनुगुणं भगवद्वाक्यमेव पठति–

नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम् ॥

इति श्रीमदानन्दतीर्थभगत्पादाचार्यविरचितं
मायावादखण्डनं सम्पूर्णम् ॥

वचनप्रसूनमाला जयतीर्थाख्येन भिक्षुणा रचिता ।
प्रियतां सदये हृदये कमलामहिलेन पुरुषेण ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितमायावादखण्डनविवरणं
जयतीर्थभिक्षुविरचितं सम्पूर्णम् ।

मन्दारमञ्जरी

॥ प्रकरणार्थमुपसंहरंस्तदनुगुणमिति ॥ अत्रापि सर्वार्थान् साधयामीत्यनेन नारायणोत्तमत्वस्यैव सर्वशास्त्रार्थत्वोक्तेरिति भावः ।

सान्द्रभक्तिमरन्दार्द्रमध्वमानसपङ्कजे ।
वसन्तं सन्ततं कंसध्वंसिहंसं भजेऽनिशं ॥

इति श्रीब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासतीर्थयतिना विरचिता
मायावादखण्डनटीका मन्दारमञ्जरी सम्पूर्णा ॥

श्रीनिवासतीर्थीयटिप्पणी

अन्यथा हीति ॥ भ्रांतिनिरासाकरण इत्यर्थः ॥ तदनुगुणमिति । प्रकरणप्रतिपाद्यसर्वोत्तमत्वानुगुणमित्यर्थः । भगवद्वाक्यं भारतरूपं व्यासवाक्यम् । समापितग्रंथो भगवांष्टीकाकारोऽनेऽपि मंगलमाचरति ॥ वचनेनि ॥

यथा केनचित् भिक्षुणा रचिता पुष्पमाला ऐश्वर्यवंतं पुरुषं प्रति दत्ता चेत्तेन दयया हृदये ध्रियते तद्वदित्यर्थः । सदये दययासहिते । कमलेति । 'महिला वनिता प्रिया' इत्यभिधानात्, कमला महालक्ष्मीः महिला वनिता यस्यासौ तथोक्तः, तेनेत्यर्थः । यादवार्यहृदंभोजमातश्रीमध्वहृद्गतः। वासवीसूनुरमलः प्रीयतां बादरायणः ।

इति श्रीयदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन
विरचिता मायावादखंडनपंचिकाव्याख्या समाप्ता ।।

**श्रीगुरुराजीयटिप्पणी**

नन्वत्र सर्वभावेनेति सर्वात्मकत्वोक्त्या भेदाभावत्वप्राप्तेः कथं तत्सापेक्षस्य क्षराक्षरोत्तमत्वस्य पारमार्थिकत्वम्? येन प्रवृत्तिनिमित्तता तस्य स्यादित्यतो भवेदेवं यदि सर्वभावेनेत्यस्य सर्वात्मकत्वाभिधानत्वं स्यात् । न चैवम् । तथासति भजतीत्युक्तविरोधापातात् । उत्तमः पुरुषस्त्वन्य इति पूर्व वाक्यविरोधापाताच्च । किन्तु भजतीत्युक्तभजनोपयोगिसर्वप्रकारसमर्पकत्वमेवेति भावेन तत्तथा व्याचष्टे ।। सर्वभावेन सर्वप्रकारेणेति ।। शिष्टं भावप्रकाशिकायां स्पष्टमिति ।

**इति श्रीमद्विद्वच्चूडामणिश्रीमद्विद्याधीशतीर्थपूज्यपादचरणशिष्येण
केशवभट्टारकेण विरचितं मायावादखण्डनपञ्चिका-
विषमपदवाक्यार्थविवरणं समाप्तम् ।**

**मायावादपरशुः**

इन्द्रियेभ्यः इन्द्रियाभिमानिदेवेभ्यः सोम-वित्तप-सूर्य-वरुणाश्व्यग्नीन्द्रजयन्तेभ्यः ।। अर्थाः अर्थाभिमानिन्यः सौपर्णी-वारुणी-पार्वत्यः उत्तमा इत्यर्थः । टीकाकारोऽन्तेपि मङ्गलमाचरति ।। वचनेति ।। कमला महिला महिषी यस्यासौ तथोक्तः ।। इति

**श्रीमत्सत्यनिधितीर्थश्रीचरणचरणाराधकश्रीसत्यनाथयतिविरचितो
मायावादपरशुः समाप्तः ।। श्रीकृष्णार्पणमस्तु ।। श्रीहरये नमः ।।**

श्री पाण्डुरङ्गि केशवाचार्य विरचितः

## ॥ मायावादखण्डनोपन्यासः ॥

ननु–

**नरसिंहोऽखिलाज्ञानमतध्वान्तदिवाकरः ।**
**जयत्यमितसज्ज्ञा नसुखशक्तिपयोनिधिः ॥**

इत्याद्यपद्ये अखिलाज्ञानमतस्य ध्वान्तसमत्वं आचार्यैः प्रतिपादितम् । तदयुक्तम् । 'तत्त्वमसि, अहं ब्रह्मास्मि' इत्यादि श्रुतिभिः ''अहं हरिः सर्वमिदं जनार्दनः'' इत्यादि स्मृतिभिश्च जीवब्रह्मैक्यस्य तात्पर्येण प्रतिपादनात् । चैतन्यातिरिक्तस्याखिलस्य सत्यत्वे अखिलान्तर्गतानां सर्वज्ञत्वाल्प ज्ञत्वादिविरुद्धधर्माणामपि सत्यत्वापत्या सर्वज्ञत्वाज्ञत्वादि-विरुद्धधर्माधिकरणयोर्जीवब्रह्मणोर्जलानलयोरिव ऐक्यायोगेन श्रुतितात्पर्य-विषयीभूतजीवब्रह्मैक्यान्यथानुपपत्त्या चैतन्यव्यतिरिक्तस्याखिलस्याज्ञान-कल्पितत्त्वस्य सिद्धत्वेन तन्मतस्य प्रामाणिकत्वादिति चेदत्र ब्रूमः ।

श्रुतितन्मीमांसादेर्जीवब्रह्मैक्याप्रतिपादकत्वात् कर्मादाविव तात्पर्याभा-वेन जीवब्रह्मैस्यश्रुतितात्पर्यविषयत्वस्यासिद्धत्वेन तदन्यथानुपपत्तेरेवाभावेन त्वयाचैतन्यातिरिक्तस्याखिलास्याज्ञान परिकल्पितत्वसिद्धेर्निर्वक्तुमशक्य-त्वात् । न च श्रुत्यादेरुपक्रमादितात्पर्यलिंगैर्जीवब्रह्मैक्यपरत्वसिद्धेस्तदन्य-थानु उपपत्तिसत्वेन तथा चैतन्यातिरिक्तस्याखिलस्याज्ञानपरिकल्पितत्व-सिद्धिः सम्भवत्येवेति वाच्यम् । तथात्वे श्रुत्यादेरनारम्भणीयत्वप्रसङ्गात् । तथाहि । आरम्भणीयत्वानारम्भणीयत्वाभ्यां वादिप्रतिवादिविमतिविष-यीभूतं, श्रुतितन्मीमांसाशास्त्रं यदि जीवब्रह्मैक्यप्रतिपादकं स्यात्तदा, प्रेक्षावदनुपादेयं स्यात्, सम्प्रतिपन्नबौद्धादिशास्त्रवत् । न च श्रुत्यादेर्जीवब्रह्मभेदपरत्वे प्रेक्षावदुपेयत्ववत् ऐक्यपरत्वेपि प्रेक्षावदुपादेयत्व सम्भवेन आपाद्यं प्रत्यापादकस्याप्रयोजकत्वेनापाद्यपादकयोर्व्याप्तेरभावा-त्कथमेतदापादनमिति वाच्यम् । श्रुत्यादेर्जीवब्रह्मैक्यप्रतिपादकत्वेऽयथार्थ-प्रतिपादकत्वापत्या .अयथार्थप्रतिपादकत्वस्य प्रेक्षावदनुपादेयत्वेन सह

व्याप्तेःबौद्धादिशास्त्रे दृष्टत्वेन यदि शास्त्रं जीवब्रह्मैक्यप्रतिपादकं स्यात्त-दाऽयथार्थप्रतिपादकं स्यात् यदि चायथार्थप्रतिपादकं स्यात्तदा प्रेक्षावदनुपादेयं स्यादिति ऐक्यप्रतिपादकत्वेनायथार्थप्रतिपादकत्वमापाद्या-यथार्थप्रतिपादकत्वेन प्रेक्षावदनुपादेयत्वस्यापाद्य मानत्वेनाप्रयोजकत्वस्य वक्तुमशक्यत्वात् । न च श्रुत्यादेर्जीवब्रह्मभेदप्रतिपादकत्वे यथार्थप्रतिपाद-कवदैक्यप्रतिपादकत्वेऽपि अयथार्थप्रतिपादकत्वाभावः किं न स्यादिति वाच्यम् ॥

मन्मते भेदस्य सत्यत्ववत् त्वन्मतेऽभेदस्य सत्यत्वाभावेनायथार्थ-त्वात्तत्प्रति पादकस्य श्रुत्यादेरयथार्थप्रतिपादकत्वस्यावश्यकत्वात् । न च त्वया भेदस्य सत्यत्ववन्मयाप्यभेदस्य सत्यत्वाङ्गीकारात् । तत्प्रतिपाद-कश्रुत्यादेयथार्थप्रतिपादकत्वं सम्भवत्येवेति वाच्यम् । त्वन्मते ऐक्यस्य यथार्थत्वसत्यत्वानुपपत्तेः । तथाहि । ऐक्यं यथार्थं सत् ब्रह्मस्वरूपातिरिक्तं वा ब्रह्मस्वरूपं वा इति विकल्पयामः । तत्र न तावदाद्यः त्वया ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वाङ्गीकारेणैक्यस्य ब्रह्मातिरिक्तत्वेऽपि यथार्थत्वे प्रोच्यमाने अद्वैतहान्यापत्तेः । न च मया भावरूपसत्यद्वया-नङ्गीकारेऽपि अभावरूपसत्यद्वितीयाङ्गीकारेण अद्वैतस्य द्वैताभावरूपत्वेन तस्य सत्यत्वाभ्युपगमेऽपि नाद्वैतहानिरिति वाच्यम् । तथात्वे भावरूपाणा-मभावनिष्ठानाम् अभावत्वादिधर्माणां सत्यत्वापत्त्या अद्वैतहानेस्तदव-स्थत्वात् । नाप्यद्वैतं ब्रह्मस्वरूपमिति द्वितीयः पक्षः सम्भवति । अवेद्यत्वं स्वप्रकाशत्वमिति त्वत्पक्षे ब्रह्मणः स्वप्रकाशत्वेनावेद्यत्वेन तदात्मकै-क्यस्यापि अवेद्यत्वे न शास्त्रस्य तत्प्रति पादकत्वानुपपत्त्याऽवेद्यत्वं स्वप्रकाशत्वमित्यस्य पक्षस्यानङ्गीकर्तव्यत्वेन स्वविषयप्रकाशत्वं स्वप्रकाश-त्वमिति मत्पक्षस्यैवाङ्गीकर्तव्यत्वेन तत्र च ब्रह्मणः स्वप्रकाशत्वेन नित्य-सिद्धत्वेन तदात्मकस्याद्वैतस्यापि नित्यसिद्धत्वेन तत्प्रतिपादकस्य सिद्धार्थ-बोधकत्वेन सिद्धसाधनतापत्तेः।

न च त्वन्मते गुणगुणिनोरभेदेन रूपाभिन्नघटस्य स्पार्शनत्वेऽपि तदात्मकस्य रूपस्यास्पार्शनत्ववत् अद्वैतस्य ब्रह्माभिन्नत्वेऽपि ब्रह्मणः

स्वप्रकाशत्वेन नित्यसिद्धत्वेऽपि अद्वैतस्यासिद्धत्वसम्भवेन तत्प्रतिपादकस्य शास्त्रस्य न सिद्धसाधनतेति वाच्यम् । मन्मते गुणगुणिनोस्सविशेषाभिन्नत्वेन भेदकार्यकारिविशेषस्य विद्यमानत्वेन तद्बलात् घटस्य स्पार्शनतायाः तदात्मकस्य रूपस्यास्पार्शनतायाश्च संभवेऽपि त्वन्मते । ब्रह्मणो-निर्विशेषत्वेन भेदकार्यकारिविशेषाभावेन ब्रह्मणः सिद्धतायाः अद्वैतादि-विशेषाक रस्यासिद्धतायाश्चा सम्भवेन तत्प्रतिपादकशास्त्रस्य सिद्धसाधन-तापरिहारासम्भवात् ।

न चाद्वैतस्य स्वप्रकाशकब्रह्माभिन्नत्वेन नित्यसिद्धत्वात्साक्षात् शास्त्रस्य तत्प्रतिपादकत्वाभावेपि तदज्ञाननिवर्तकत्वात् शास्त्रस्य न सिद्ध-साधनतेति वाच्यम् । अज्ञानस्यावरणत्वेनावरणस्याव्रीयमाण व्याप्तत्वेन त्वन्मते आव्रीयमाणाभावेन तदावरणाज्ञानस्यासम्भवेन शास्त्रस्य तन्निवर्त-कत्वानुपत्तेः । तथाहि । अज्ञानस्याव्रीयमाणं भवत् किं ब्रह्मस्वरूपं वा स्यात् । ब्रह्मगतविशेषो वा इति विकल्पयामः । न तावदाद्यः । ब्रह्मस्व-रूपस्य स्वप्रकाशत्वेन नित्यसिद्धत्वेन तस्याव्रींणमाणत्वासम्भवात् । नापि द्वितीयः त्वन्मते ब्रह्मणो निर्विशेषत्वेन तद्गतविशेषस्याभावेन तस्याव्री-यमाणत्वानुपपत्तेः । तस्माच्छास्त्रस्यैक्यपरत्वे तस्य स्वप्रकाशब्रह्माभिन्नत्वेन नित्यसिद्धत्वेन तत्प्रतिपादकशास्त्रस्य सिद्धसाधनत्वं दुर्निवारमेव ।

न चैक्यपरस्य शास्त्रस्य सिद्धार्थ बोधकत्वेऽपि यथार्थप्रमाणमिति प्रमाणलक्षणाक्रान्तत्वे तत्प्रामाण्यसम्भवेनाप्रामाण्या प्रसङ्गात् नेदमनिष्टा-पादनमिति वाच्यम् । अनधिगतार्थगन्तृप्रमाणमिति भट्टोक्तप्रमाणस्यैव व्यवहारे भट्टनय इति वदता त्वयाङ्गीकारेण यथार्थस्य प्रमाणलक्षणत्वा-नङ्गीकारेण ऐक्यप्रतिपादकस्य शास्त्रस्य यथार्थत्वेपि सिद्धार्थबोधकत्वे-नाधिगताथेगन्तृतयाऽनधिगतार्थ गन्तृत्वाभावेनोक्तप्रमाण लक्षणानाक्रमा-न्तत्वेनाप्रामाण्यस्य प्रसक्त्यानिष्टापादनत्वसम्भवात् । तस्माज्जीवब्रह्मैक्यस्य ब्रह्मस्वरूपानतिरेके ब्रह्मस्वरूपस्य प्रकाशत्वेन नित्यसिद्धत्वात् तदात्मै-क्यस्यापि नित्यसिद्धत्वेन शास्त्रस्य सिद्धार्थबोधकत्वेन सिद्धसाधनता-

पत्याऽनतिरेकपक्षस्याङ्गीकर्तुमशक्यत्वेनातिरेकपक्षस्यैवाङ्गीकर्तव्यत्वात् तत्रा-प्यैक्यस्य यथार्थत्वे अद्वैतहान्यापत्त्या अयथार्थत्वस्यैवाङ्गीकर्तव्यत्वेन तत्प्रतिपादकस्य शास्त्रस्यायथार्थ प्रतिपादकत्वापत्त्या यदि शास्त्रम् ऐक्य-प्रतिपादकं स्यात्तदा अयथार्थप्रतिपादकं स्यात्, यदि चायथार्थप्रतिपादकं स्यात्तदा प्रेक्षावदनुपादेयं स्यात् इति प्रसगः सुस्थः ।

किञ्च शास्त्रस्य ऐक्यप्रतिपादकत्वे विषयादिशून्यत्वापत्त्या विषयादि-शून्यस्य प्रेक्षावदनुपादेयत्वेन सह व्याप्तेः सर्वसंमतत्वेन, यदि शास्त्रम् ऐक्य प्रतिपादकं स्यात् तर्हि विषयादिशून्यं स्यात् तदा प्रेक्षावदनुपादेयं स्यादिति ऐक्यप्रतिपादकत्वेन विषयादिशून्यत्वमापाद्य विषयादिशून्यत्वेन प्रेक्षावदनु-पादेयत्वस्यापाद्यमानत्वात्राप्रयोजकत्वेन नैक्यपरस्य शास्त्रस्य विषयाभा-वोऽसिद्ध इति वाच्यम् । सामान्यतो ज्ञातस्य विशेषाकारेणाज्ञातस्यैव विषयत्वेन तस्याज्ञानसापेक्षत्वेनाज्ञानस्यावीयमाणसापेक्षत्वेन त्वन्मते च उक्तरीत्या व्रीयमाणाभावेन तत्सापेक्षस्याज्ञानस्यासम्भवेन तत्सापेक्ष-विषयस्यापि अभावोपपत्तेः । किं च विषयत्वाभिमतस्यैक्यस्य ब्रह्मभिन्न-त्वेपि यथार्थत्वेऽद्वैतहान्यापत्त्या अयथार्थत्वे तत्प्रतिपादकस्य शास्त्रस्यात-त्त्वावेदकत्वेनाप्रामाण्यापत्त्या परस्परविरुद्धयोधर्मयोरन्यतरनिषेधस्यान्यत-रविधिव्याप्तत्वेन भेदाभेदयोर्विरुद्धत्वेनाभेदस्यासत्यत्वे भेदस्य सत्यत्त्वा-पत्त्या चातिरेकपक्षस्याप्रामाणिकत्वेनानतिरेकपक्षे च ब्रह्मणः स्वप्रकाशत्वेन नित्यसिद्धत्वात्तदात्मकैक्यस्यापि सिद्धत्वेनैक्यस्य विषयत्वानुपपत्तेः ।

किं च त्वन्मते प्रयोजनमपि न सम्भवति । ''न चाविद्यास्तमयो मोक्षः स संसार उदाहृतः'' इति वचननाज्ञाननिवृत्तेः प्रयोजनत्वसम्भवात् प्रयोजनाभावोऽसिद्ध इति वाच्यम् । त्वन्मतेऽज्ञानस्यैवासम्भवेन ज्ञान-निवृत्तेः प्रयोजनत्वानुपपत्तेः । किं चात्मैवाज्ञानहानिरिति वदतस्तव मते अज्ञाननिवृत्तेरात्मस्वरूपत्वेन आत्मस्वरूपस्य च शास्त्रात्प्रागेव सिद्धत्वेन मदात्मकाज्ञाननिवृत्तेरपि पूर्वसिद्धत्वेन शास्त्रसिद्धत्वाभावेन तत्प्रयो-जनत्वानुपपत्तेः । नचाज्ञाननिवृत्तेर्ज्ञातात्मरूपकत्वाङ्गीकारेण केवलात्म-

मात्रत्वस्य चानङ्गीकारात् आत्ममात्रस्य च स्वप्रकाशतया नित्यसिद्धत्वेपि ज्ञातात्मनोऽसिद्धत्वेनात्मज्ञानस्य च शास्त्रसाध्यत्वात्तदात्मकाज्ञाननिवृत्तेः प्रयोजनत्वं सम्भवत्येवेति वाच्यम्। त्वन्मतेऽज्ञाननिवृत्तेर्ज्ञाता-त्ममात्रस्यैवानुपपत्तेः । तथाहि । अज्ञाननिवृत्तेर्ज्ञातात्ममात्रत्वं नाम किं चिद्रूपज्ञानविषयात्ममात्रत्वं वा ज्ञानविषयात्ममात्रत्वं वा इति विकल्पयामः । नाद्यः । आत्मनश्चिद्रूपताज्ञानविषयत्वे तस्य फलव्याप्यत्वेन मिथ्यात्वात्त-दात्मकाज्ञाननिवृत्तेस्सत्वप्रसक्त्याऽनिर्मोक्षत्वापत्तेः । नापि द्वितीयः पक्षः सम्भवति । तत्रापि वृत्तिः किमात्मनि विशेषणं, उपलक्षणं वेति विकल्पयामः । नाद्यः । वृत्तेरात्मविशेषणत्वे वृत्तिविशिष्टस्यात्मनो मोक्ष-त्वापत्त्या विशेषणनिवृत्तौ विशिष्टनिवृत्तेरावश्यकत्वेन वृत्तेर्विनाशे वृत्ति-विशिष्टस्यात्मनोपि निवृत्यापत्याऽनिर्मोक्षत्वप्रसङ्गात् । न द्वितीयः । वृत्ते-रात्मोपलक्षणत्वे वृत्त्युपलक्षितस्यात्मनो मोक्षत्वापत्त्या जीवन्-मुक्तत्वाभावप्रसङ्गात् ।

ननु चाज्ञाननिवृत्तेरात्मस्वरूपातिरिक्तत्वेन शास्त्रात्प्रागात्मस्वरूप-सिद्धावपि अज्ञाननिवृत्तेरसिद्ध्या शास्त्रसाध्यत्वोपपत्तेर्युक्तमेव तस्याः प्रयोजनत्वम् । न चाद्वैतहान्यापत्त्या तस्याः सत्त्वस्य वक्तुमशक्यत्वात् । अनिर्मोक्षत्वापत्त्याऽसत्वस्य वक्तुमशक्यत्वात् । विरोधापत्त्या सदसत्वस्य वक्तुमशक्यत्वात् । प्रतियोगितन्निवृत्त्योर्वैलक्षण्यस्यावश्यकत्वेन सदसद्वि-लक्षणत्वादज्ञानस्य तन्निवृत्तेरपि सदसद्विलक्षणत्वे अज्ञाननिवृत्तित्व-स्यैवानुपपत्त्या सदसद्विलक्षणत्वस्यैवानुपपत्तिप्रसङ्गात् । अज्ञाननिवृत्ते-रात्मस्वरूपातिरिक्तत्वानुपपत्तिरिति वाच्यम् । नसन्नासन्न सदसन्नानि-र्वाच्यश्च तत्क्षयः। यक्षानुरुपो बलिरित्याचार्याः प्रत्यपीपदन् । नित्यानन्द-बोधोक्तरीत्या ज्ञानस्य सदसद्विलक्षणविलक्षणत्वरूप पञ्चमप्रकारतायाः सिद्धत्वेन उक्तदोषाप्रसङ्गादिति चेन्न । उक्तरीत्या त्वन्मते आव्रीयमाणा भावेनावरणरूपाज्ञानासम्भवेनाज्ञानस्य सदसद्विलक्षणत्वरूप चतुर्थप्रकार-स्यैवासिद्ध्याज्ञाननिवृत्तेः सदसद्विलक्षणविलक्षणरूपं चमप्रकारत्वप्लवस्य दूरनिरस्तत्वात् । किं चाज्ञाननिवृत्तेरात्मतस्वरूपातिरिक्तत्वे सा किम-

ज्ञानकार्यभूता स्यात् उत नेति विकल्पयामः । तत्र न तावदाद्यः । अज्ञाननिवृत्तेरज्ञानोपादानकत्वे उपादानेन विना उपादेयस्यावस्थितेरसंभवेनाज्ञाननिवृत्तिदशायामज्ञानसत्वस्यावश्यमङ्गीकर्तव्यत्वेन तदङ्गीकारे च अज्ञाननिवृत्तेः स्वरूपस्यैवासम्भवेन पञ्चमप्रकारतायाः दूरनिरस्तत्वात् । नापि द्वितीयः । त्वया ब्रह्मातिरिक्तस्य सर्वस्याज्ञानतत्कार्ययोरन्यतरत्वाङ्गीकारेणाज्ञाननिवृत्तेरात्मस्वरूपातिरिक्तत्वेपि अज्ञानकार्यत्वाभावेनाविद्यातत्कार्ययोरन्यतरत्वाभावापत्त्या सिद्धान्ताभावापत्तेस्तस्मादैक्यस्य विषयत्वानुपपत्त्याऽज्ञान निवृत्तेश्च प्रयोजनत्वानुपपत्त्या विषयप्रयोजनकामस्य चाधिकारिणोप्यभावेन तदभावादेव तदविनाभूत तत्सम्बन्धस्याप्यसम्भवेन 'यदि शास्त्रम् ऐक्यप्रतिपादकं स्यात्तदा विषयादिशून्यं स्यात् । यदि च विषयादिशून्यं स्यात्तदा प्रेक्षावदनुपादेयं स्यादित्यैक्यप्रतिपादकत्वे प्रेक्षावदनुपादेयत्वापत्त्या जीवब्रह्मैक्यस्य श्रुतितात्पर्यविषयत्वाभावेन तदन्यथानुपपत्तेरेवाभावेन तया चैतन्यस्यतिरिक्तस्याखिलस्या प्रामाणिकत्वाद्युक्तमेव तस्य ध्वान्तसमत्वं प्रतिपादितमाचार्यैरिति सिद्धम् ।

**इति श्रीविद्याधीशपूज्यपादशिष्येण पाणडुरङ्गि केशवेन विरचितः मायावादखणडनोपन्यासः ॥**